३१९ संस्थाप्यमानो दुर्नीत्या सूच्येव जरटः पटः ॥
प्रत्युतोपद्रवोल्पोपि शतद्वारः प्रजायते ॥ ८४९ ॥

३२० व्रजति रजनी त्यक्त्वा क्वापि क्षये क्षणदाकरम् ।
पदमुपगतस्यास्तं संध्या रवेरनुगच्छति ।
इति परिणते प्रायेण्युच्चावचे परिचिंतिते ।
क्वचन नियमाश्रिया वंद्या न वा सुधियां स्त्रियः ॥ ८५६ ॥

३२१ नूनं स तेजसैरेव ससृजे परमाणुभिः ।
कुतोन्यथाभूत्प्रसवे दुष्प्रेक्ष्यो महतामपि ॥ ८७४ ॥

३२२ आर्तां च वाचमाकर्ण्य तेषां तृष्णानिवारणम् ।
प्रावृषेण्य पयोवाहश्चातकानामिवाकरोत् ॥ ८८० ॥

३२३ योग्यः कृतापकारोपि कदाचिदुपयुज्यते ।
विहितागारदोहाग्निः शरणं भोज्यसिद्धये ॥ ८९१ ॥

३२४ यदुल्लासाय संरंभो धीरैर्विस्तार्यते महान् ।
कृत्यं हिनस्ति तदैवमत्यल्पेनैव वस्तुना ॥ ९१७ ॥

३२५ उन्मीलनं तिग्मरुचिः प्रयत्नाद्येषां सहस्रेण करैः करोति ॥
उन्मूलयत्येककरेण तानि पद्मानि धाता कुपितो द्विपेन ॥९१८॥

३२६ राजशब्दस्तदा सेहे न कुत्राप्याधिरोपणं ।
अत्युदग्रतया तस्मिन् लघुत्वेनान्यराजसु ॥ ९२० ॥

३२७ अन्योपजीव्यतां प्रापुः तस्यार्थैत्वेनमार्गणाः ।
विश्वाप्यायकतां मेघाः प्रगयेनेव वारिधेः ॥ ९३२ ॥

३२८ सौवर्णामलसाराढ्या राजधान्योधरापतेः ।
सुधाच्छाभ्रंलिहगृहा भ्रेजिरे भुवनाद्भुताः ॥ ९३८ ॥

३२९ सोज्ञासीद्यावतीर्विद्यास्तासां नामापि निश्चितम् ।
वक्तुं नास्त्येव सामर्थ्यं व्यक्तं वाचस्पतेरपि ॥ ९४१ ॥

३३० क्षुद्यार्तास्त्रियुगः शिखी बहुपदं गृण्हाति धावन्नाहेम् ।
भानुः पादसहस्रभाक्प्रतिपदं संचार्यते नूरुणा ॥
वंच्यंते बलिनोपि यल्लघुबलैः सामर्थ्यहीनैश्च यत् ॥
भ्राम्यंते परिपूर्णवृत्तय इदं दैवस्य लीलायितम् ॥ ९५० ॥

३३१ प्रगल्भभावः प्रतिभानमोजः ।
प्रयोगचातुर्यमसंभ्रमश्च ॥
महाशयानामतिसंकटेषु ।
धैर्योपनद्धां न धियं जहाति ॥ ९८० ॥

३३२ स्वर्यैर्दष्टैः क्षतं केचिद्दर्यंत्यधिकमाहवे ।
पारकीयैस्त्रसंत्यन्ये कोंतरं वेत्ति देहिनाम् ॥ ९८८ ॥

३३३ दूत्यार्होयमिति प्रहाय निकटाद्देशांतरं वाग्मिनम् ।
सूरिर्बंधुवियोगकृन्ननुवचो शुष्योति संत्यज्य च ॥
शूरो राज्यमसौ हरेदिति तया हित्वा विचारोज्झितो ॥
धूर्तप्रेरणया बुधो नृपपशुर्नायाति नाशं चिरात् ॥ ९९८ ॥

३३४ स्वैराहारोदित गुरुमदा शृंग कंडूति शांत्यै ॥
दुर्वारेर्ष्याकुलकुमतयो यत्र दुर्मंत्रिमेषाः ॥
घ्नंत्यन्योन्यं भवति गणितैर्वासरैरेव कैश्चित् ॥
मध्यस्थाणोरिव नरपतेस्तत्र सर्वांगभंगः ॥ १०१२ ॥

३३५ गोप्तॄन्स्वगोत्रजान्हत्वा भोक्तुमेकस्य कस्यचित् ।
कुर्वंति दैवोपहताः राज्यं निष्कंटकं नृपाः ॥ १०७० ॥

३३६ संरूढं मधुगोलमुच्चविटपव्यूहावलीगह्वरे ॥
मूढः कर्तुमकृच्छ्रहार्यमभितः कस्यापि भव्यात्मनः ॥
दैवप्रेरणया प्रकंपविवशः पत्रप्रहारैर्दृढम् ॥
तद्गोप्तॄन्मधुपान्निहत्य शमयत्यश्वत्थपृथ्वीरुह ॥ १०७१ ॥

३३७ आलेख्यं गगने लिखामि बिसिनीसूत्रैर्वयाम्यम्बरम् ।
स्वप्नालोकितमानयामि कनकं ग्रथ्नामि वप्रं हिमैः ॥
इत्याद्युक्तमपि स्फुटं जडमतिर्जानाति सत्यं नृपो ।
यस्तादृक्त्रपया न वक्ति स गतप्रौढिः परं वंच्यते ॥ १०७८ ॥

३३८ अधिगतवतां लोके विश्वाद्भुतामपि संपदम् ।
न खलु विरतिर्दुष्कर्मभ्यो धनार्जनकांक्षिणाम् ॥
किमपि कमलावाप्त्यै पद्माकरोद्धृतिघातकम् ।
भजति कमलालीलावासोभवन्नपि हि द्विपः ॥१०९९॥

३३९ श्रीगर्भपदपर्यायच्छन्नजाड्यप्रभावतः ।
तथार्जितस्य कोशस्य सोनुरूपव्ययोभवत् ॥ ११०८ ॥

३४० मृगीदृशां दुर्लभतां हयानाम् ।
श्वासान्विटानां कुवचः स हंतां ॥
वैतालिकानां च विकत्थनत्वम् ।
क्रेतुं क्षितीशाः क्षपयंति लक्ष्मीम् ॥ ११०९ ॥

३४१ कोपप्रसादैर्दयिताजनस्य ।
हयादिवृत्तांतगवेषणेन ॥

भृत्यानुवृत्या मृगयाकथाभी ।
राज्ञां शिशूनामिव याति कालः ॥ १२२० ॥

१४२ विलासहासासनयानदान ।
पानाशनाद्या असतीः सतीर्वा ॥
छायेव चेष्टाः क्षितिपालवर्गः ।
परानुकारेण करोति सर्वाः ॥ १२२१ ॥

१४३ अमानुषत्वं पुरुषाधिराजा ।
विटस्तवैः स्वस्य विचिंत्य सत्यम् ॥
तृतीयमक्ष्यभ्यधिकं भुजो वा ।
ममेति मत्वा न विदंति मृत्युम् ॥ ११११ ॥

१४४ निशासु येषां प्रभवंति दारा ।
दिनेष्वमात्या नियताधिकाराः ॥
अहो भ्रमः स्वस्य यदत्र तेपि ।
विदंति भूपाः प्रभविष्णुभावम् ॥ ११११ ॥

१४५ स्वादूचितं स्वादुतयैव भुंक्ते ।
थूत्कृत्य मुंचत्यपि थूत्कृतानि ॥
वित्रासितस्त्रासमुपैत्यकस्मात् ।
भूभृच्च बालश्च समानभावः ॥ १११४ ॥

१४६ अपरीक्ष्याहृतो भृत्यः स्वामिनामतिसंकटे ।
करोति व्यसनापातमजात्योसिरिवाहवे ॥ ११६० ॥

१४७ वादी वादपराजितः प्रतिभटं गालीभिरत्याक्षिपन् ।
योषिन्नष्टसतीव्रता कुकलहैरुद्वेजयंती पतिम् ।
कायस्थश्च हृताखिलार्थमहिमा कूटे नृपं पातयन् ।
स्वस्यासन्नपराभवस्य कुरुते भूयस्समुत्तम्भनम् ॥ ११६९ ॥

१४८ उत्थाने पातयन्कांश्चित्पतने कांश्चिदुत्क्षिपन् ।
वेधाः कंदलयत्येव कंदुकक्रीडितभ्रमम् ॥ ११८८ ॥

१४९ अल्पापकारमपि पार्श्वगतं निहंति ।
नीचो न दूरमसमागसमप्यरातिम् ॥
श्वा निर्दशत्युपलमंतिकमापतंतम् ।
तत्त्यागिनं न तु विदूरगमुग्ररोषः ॥ १२०४ ॥

१५० कोपाग्निमतं नरपतेरकालसुमनंतरोः ।
वेतालस्याट्टहसितं नैवमेव प्रशाम्यति ॥ १२०९ ॥

३५१ ये संप्ररूढविपुलप्रणयाभिमानाः ।
निश्शंकमीश्वरनिषेवणमाचरंति ॥
मंत्रानुषंगरभसाद्भुजगेंद्रसख्यं ।
प्रख्यापयंत इव ते प्रलयं प्रयांति ॥ १२१० ॥

३५२ मंडले राजदंडेन क्षतेनेव परिक्षते ।
क्षारपातोपमान्यापि प्राभूदुःखपरंपरा ॥ १२१६ ॥

३५३ अहारि कांचनस्थाली यैः पार्थिवगृहादपि ।
सत्यप्यहस्करे जघ्नुस्तस्करास्तादृशा विशः ॥ १२१७ ॥

३५४ गंधेनाशुचिना घ्राणं कर्णौ भीमैश्शिवारुतैः ।
अखिद्यत शवाकीर्णे श्मशान इव मंडले ॥ १२३८ ॥

३५५ उल्लासो रात्रिषु दिने स्वापः क्रौर्यमुदग्रता ।
अवाङ्मयत्वं कर्तव्ये दक्षिणे शोचिते रतिः ॥ १२४४ ॥

३५६ इत्यादयस्तस्य केचिद्धर्मा नक्तंचरोचिताः ।
तथाहि तत्कालभवैः प्रियाः प्राज्ञैः प्रकीर्तिताः ॥ १२४५ ॥

३५७ आसन्नाभ्युदयं शत्रुं दृष्ट्वेव विधिचोदितः ।
शंकाविष्करणाल्लोके नयेत् संभावनाभुवम् ॥ १२६० ॥

३५८ पृथिव्यां वीर भोज्यायां क्रमो वा क्वोपयुज्यते ।
वीरस्य च सहायोस्तु कः स्वबाहुद्वयात्परः ॥ १२८८ ॥

३५९ सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते ।
बभूव तुल्य संघर्षः सर्पयोरिव दंतिनोः ॥ १३१६ ॥

३६० तथाबद्धोपि निर्दग्धो स भव्यः प्रभवे हितम् ।
स्वामिभक्तिर्विपर्येति पर्यंतेपि न मानिनाम् ॥ १३२३ ॥

३६१ क्लीबश्छिन्नवपुस्त्वचा सह वसत्यच्छेद्यया कच्छपो ।
निर्वर्मारणकर्मसाहसमहोत्साहश्च सिंहः सदा ॥
धिक्प्राग्दुष्कृतपक्षपातरभसो नीचेषु मुग्धो विधिः ।
वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतं ॥ १३२९ ॥

३६२ किं पातालतमो न हंति हिमगुः किं नो विषं भीतये ।
पानीयं गिलतः किमांतरशिखिध्वस्त्यै न धन्वंतरिः ॥
सर्वत्रैकपदे प्रयात्यफलतां वाच्यो जडो नांबुधिः ।
सिद्धैर्दैवविधेयतां विमृशतां स्तुत्यैव वस्तुज्ञता ॥ १३७९ ॥

३६३ क्षत्रधर्मं पुरस्कृत्य शासतां क्ष्मां क्षमाभुजाम् ।
को दैन्यस्यावकाशः स्यादाशीर्येषां मृधेवधः ॥ १३९२ ॥

३६४ अनुद्योगश्च लज्जा च भयं द्वैधं च मंत्रिणा ।
भूभुजा व्यसनोल्लासे शत्रवो न च गोत्रिणः ॥ १३९३ ॥

३६५ कार्यं न पश्येदलसः स्वयं यो ।
भृत्येषु विन्यस्तसमस्त कृत्यः ॥
परप्रत्याश्रयस्येव विनष्टदृष्टेः ॥
पदे पदे तस्य विलोपघातः ॥ १३९४ ॥

३६६ लज्जेहमस्य स्वयमात्त शस्त्र ।
स्वल्पस्य शत्रोः कलयन्नवज्ञां ॥
एकं किलादीर्घमतिर्ददाति ।
स्वयं प्रवृद्धिं त्रपया विमुग्ध. ॥ १३९५ ॥

३६७ कालेन याति कृमितां महेंद्रो ।
महेंद्रभावं कृमिरप्युपैति ॥
अयं प्रथीयानयमप्रतिष्ठः ।
इत्येष निष्ठानुचितोभिमानः ॥ १३९६ ॥

३६८ पराभवाधायि भयं जिगीषो ।
सर्वांगवैकल्यवताहितेन ।
येनाभियुक्तः स समस्तसंपन् ।
पूर्णोपि वैकल्यमतत्वमेति ॥ १३९७ ॥

३६९ अमात्यवैमत्यवशेन निष्ठा ।
दृष्टा न कार्यस्य तनीयसोपि ॥
वैशाखरज्वोरिव कर्षकाभ्याम् ।
पर्याययोगेन कृते विकर्षे ॥ १३९९ ॥

३७० समग्र शक्तेरेकेनाप्याशाक्रांतस्य भूपतेः ।
वैरी सर्वांगहीनोपि राज्यमायुश्च कर्षति ॥ १४०० ॥

३७१ नृत्यच्छिन्नशिरोधरोद्धुरनरे ज्यालाबुवीणा गुणा ।
प्रद्माणिन्युदयच्छिवारुत्शिखिज्वालाप्रदीपांकुरे ॥
धन्या केप्युपलभ्य वीरशयने शांताभिमानज्वरो ।
श्लाघश्लाघ्यशरीरता सफलितस्निग्धाशिषः शेरते ॥ १४०३ ॥

३७२ उदात्तमित्यतकृत्यं संचिंत्य कितवा इव ।
राज्ये भजंते दीव्यंतः क्षत्रियास्त्रासहीनताम ॥ १४०४ ॥

३७३ गुणांतानपि जीवित्वा काय. सापाय एव य. ।
तत्त्यागमात्र साध्येर्थे धिक् दैन्यमनुजीविनाम ॥ १४३१ ॥

३७४ योरितोपि विशंत्यग्निं यं ध्यात्वा विस्मृतिं व्रजेत् ।
भर्तृस्नेहः स पुंसोपि यस्य कोन्यस्ततोधमः ॥ १४११ ॥

३७५ क्षुत्क्षामस्तनयो वधूः परग्रहप्रेष्यावसन्नः सुहृत् ।
दुग्धागौरशनाद्यभावविवशा हंबारवोद्गारिणी ।
निष्पथ्यौ पितरावदूरमरणौ स्वामीद्विषन्निर्जितो ।
दृष्टो येन परं न तस्य निरये भोक्तव्यमत्स्यप्रियम् ॥ १४१४ ॥

३७६ रुद्रोपेंद्र महेंद्राद्याः प्रयातारो यदध्वना ।
उपस्थितायां नियतौ तत्र मर्त्यस्य का शुचः ॥ १४१८ ॥

३७७ पक्षांतरोरिरवलंबनभूः सनेत्रम् ।
दुग्धेन यस्य मरणं धिये कैरिघेत्थम् ॥
पारंगते मथनकर्मणि मंदराद्रेः ।
दोषोप्यते विगुणहेतुपरीक्षणेन ॥ १४२३ ॥

३७८ गच्छन् शरीरविच्छेदादपि भस्मावशेषताम् ।
कर्पूरः सौरभेणेव जंतुः ख्यात्यानुमीयते ॥ १४३५ ॥

३७९ तुंगावपातनहठव्यसनी विधाता ।
स्वोत्पत्तिपद्मकुलजेपि सरोजखंडे ॥
संकोचिनि द्विजपतावपि शुद्धिवंध्ये ।
मातंगहस्तपतनैः कुरुतेव मानम् ॥ १४३९ ॥

३८० लक्ष्मीतडिल्लता कीर्तिर्बलाका शौर्यगर्जितम् ।
प्रतापः शक्रचापं च भागधेयाम्बुदानुगम् ॥ १४५५ ॥

३८१ जानीतिविन्नाम कश्चित्प्रयोगस्तु विहीयते ।
अत्रविलुभ्यते सर्वो विषयज्ञस्तु दुर्लभः ॥ १५२९ ॥

३८२ कृतघ्नभावं पितरि प्रपन्ने विगर्हणां नार्हति तत्प्रसूतिः ।
कल्कंभिवेच्चात्तिलगुज्झते किं तैलेन दत्तःकुसुमाधिवासः॥१५३१

३८३ विभवैर्नित्यसंमूढा जानते त्वंतरं नृपाः ।
तदा शक्या यदा तेषां प्रलापैरेवसत्क्रियाम् ॥ १५३६ ॥

३८४ ज्ञास्यस्यद्यांतरं राजन्ममेत्युक्त्वा विनिर्गतः ।
खड्गधाराजलैर्मानी म्लानिमक्षालयद्रणे ॥ १५३४ ॥

३८५ प्रजापीडनसंतापात् समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ १५८२ ॥

३८६ सर्वैर्यथा निखिलरंध्रमुखेन वंशः ।
संपूरितो न खलु शब्दमपाकरोति ॥

तैस्तैस्तथा बहुपथप्रचयेन मंत्रः ।
संकल्पितः किल न निश्चयमभ्युपैति ॥ १६०१ ॥

३८७ भाग्यक्षयस्यैतदेव लक्षणं प्राकृतोपि यत् ।
अपृष्ठः कथयेद्धाष्टर्यात् मंत्रं स्वहृदयोचितम् ॥ १६०२ ॥

३८८ पर्याप्तत्कालकरस्थभोगिसंदर्शनेनैव मतिप्रदीप ॥
क्षिप्रं प्रशान्त्युन्मुखतामुपैति विनाशकालेषु शरीरभाजाम् ॥२९॥

३८९ गर्भवास इव पौरुषे स्फुरन् किं न कर्म पुरुषश्चिकीर्षति ।
कर्म वायुरिव संस्पृशन्हठान्मूढमेव कुरुते तु तं विधि ॥१६५२॥

३९० प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः ।
प्रवासे विस्मृते राज्यसुखे लब्धे च कुत्रचित् ॥१६६०॥

३९१ योगतो गत एवासौ तत्क्षत्या नापरः क्षतः ।
सर्वो निजसुखापेक्षी न किंचित्कोपि शोचति ॥१६८४॥

३९२ लोकैकचक्षुषि गते परलोकमर्के ।
लोक स्वपत्यखिल एव सुखं गृहेषु ।
कोन्यो विचेतयितुमर्हति विश्वमेतत् ।
तिष्ठेन्मया विरहमेत्य कथं किलेति ॥१६८५॥

३९३ गोप्यं रहस्यभणितंमत्यल्पहृदयातिथि ।
अमृतं पारदमिव अल्पसत्वैस्सुदुर्जरम् ॥१६९०॥

३९४ नान्य स इव कालेस्मिन्ददृशे भूतिमान्नृपः ।
गर्हो निर्हरणत्वं च तस्यैवान्यस्य नेक्षितम ॥१७१४॥

३९५ दीर्घो हर्षेनृपोदंतः सोयं कोप्यद्भुतावहः ।
रामायणस्य नियतं प्रकारो भारतस्य वा ॥१७२८॥

३९६ भाग्यांबुवाहतडितस्तरला श्रियस्ताः ।
तच्चावसान विरसं प्रसभोन्नतत्वम ॥
तत्रापि नैव बत मोहहताशयानाम ।
शांति प्रयाति विभवानुभवाभिमान. ॥ १७२९ ॥

३९७ तावत्यप्यवरोधिकापरिकरे नैकापि चक्रंद तम ।
तावत्स्वप्यनुगेषु नानुसृतवान्कोप्यास्त तीर्थे न वा ॥
लोकस्य स्वसुखोपलिप्तमनसो वीक्ष्येतिनिस्स्नेहताम् ।
निर्वेदं समुपेत्य नाश्रयति धिक्स्वान्तं वनान्ते रतिम ॥१७३०॥

३९८ नादौ किंचिदभवति नियतं यच्च पश्चान्न किंचित ।
मध्ये5कस्मात्सपदि घटयन्सौस्थ्यदौस्थ्यानुरोधम् ।

निःशीर्षाधिनिर्नष्ट इव मुहुः कोपि जंतुर्नटित्वा ।
नो जानीमो भवजवनिकान्तर्हित क्व प्रयाति ॥ १७३१ ॥

---

## आठवा तरंग

५९९ छन्नकोपप्रमादोभूत्कंचित्कालं नवो नृप ।
प्राङ्मंथादिव पाथोधिरव्यंजितविषामृत ॥ २ ॥

६०० अवभज्य तरुं चक्रं सुचिरं नावतिष्ठते ।
उदग्रकर्मा च पुमान्निहत्यत्युन्नतं रिपुम् ॥ ३४ ॥

६०१ लोष्ठमात्रावशेषेपि लब्धे नृपपदे ह्यधात ।
स दान विभ्रमांस्तान्ये धनदेनापि दुष्करा ॥ ७२ ॥

६०२ सा ह्यानृशंस्यमाधुर्यत्यागसत्यप्रयतानयै ।
अस्तंभार्तपरित्राणमुख्यैर्भव्या भवद्गुणैः ॥ ८३ ॥

६०३ पितरं कर्कटो हंति मातरं हंति पुत्रिका ।
हंति सर्वं तु कायस्थ कृतघ्न प्राप्तसंभव ॥ ८९ ॥

६०४ विषवृक्षो नियोगी च यदेवाश्रित्य वर्धते ।
चित्रं करोति तस्यैव स्थानस्यानभिगम्यताम् ॥ ९१ ॥

६०५ नहि क्षुद्राश्वकायस्थपिशाचाविप्रवैरिणाम् ।
शंसंत्यंतरितं दंडं दंडनीतिविशारदा ॥ ११४ ॥

६०६ विस्मृतिं राज्यलब्धानां पूर्वसंकल्पवासना ।
प्रयाति प्राप्तजनुषां गर्भवासस्पृहा इव ॥ ११८ ॥

६०७ स्रोतोभिव्यस्तमंबोधौ लभ्यं मेघमुखै पयः ।
प्राप्तिर्भूयस्तु नास्त्येव वणिग्न्यस्तस्य वस्तुन ॥ १२८ ॥

६०८ तैलस्निग्धमुख स्वल्पालापो मुद्राकृतिर्भवन् ।
न्यासग्रासविवादोग्रो वणिग्व्याघ्राद्विशिष्यते ॥ १२९ ॥

६०९ विवादे श्रेष्ठिनां शाठ्यं स्मितै प्रावसख्य दर्शनै ।
मुक्तं मुक्तं ज्ञानमानं प्राणांतेपि न मुंचति ॥ १३० ॥

६१० निसर्गवंचका वेश्या कायस्थो द्विविरो वणिक् ।
गुरूपदेशोपस्कारैर्विशिष्टा सविषाद्विषो ॥ १३१ ॥

६११ चंदनाकालिकेश्वेतांशुकेधूपाधिवासिनी ।
विश्वस्त स्यात्किराते यो विप्रकृष्टस्य नापद ॥ १३२ ॥

८१२ ललाटदृक्पुटश्रोत्रद्वंद्वहृन्न्यस्तचंदनः ॥
षड्बिंदुर्वृश्चिक इव क्षतात्प्राणांतकृद्वणिक् ॥ १३३ ॥

८१३ पांडुश्यामोग्निधूमार्द्रसूच्यास्यो गहनोदरः ।
तुंबी फलोपम श्रेष्ठी रक्तं मासं च कर्षति ॥ १३४ ॥

८१४ वर्षमासग्रहतिथिप्रत्यावृत्ति पुनः पुनः ।
संसारस्येव तस्यांतं न ययौ नर्तितांगुलेः ॥ १४५ ॥

८१५ प्रसुप्तानां फणींद्राणामिव कोपोद्भवं विना ।
तेजोविस्फूर्जितं ज्ञेयं नहि नाम शरीरिणाम् ॥ १६५ ॥

८१६ विविधे भूतसर्गेस्मिन्न च काकश्चित्स विद्यते ।
वपुर्वंशचरित्रादि यस्य दोषैर्न दूषितम् ॥ १६६ ॥

८१७ जातिः पंकरुहाद्वपुः कपिलताक्रांतं शिर खंडनम् ।
प्रभ्रश्यच्छुचिशीलतादिविगुणाचारप्रदुष्टं यश ॥
विश्वस्रष्टुरिति प्रभूतविषयव्याप्तिस्पृशो दुःसहा ।
दोषा यत्र पुरोस्तु तत्र कतमो निर्दोषतोत्सेकभूः ॥१६७॥

८१८ आस्थानाचारसंलापव्यवहारादिमंडले ।
नवमेवाभवत्सर्वं तस्मिन्नभिनवे नृपे ॥१८८॥

८१९ लक्ष्मी कार्मण्यचूर्णांका वेश्येव वशवर्तिन ।
धीरानपि विधायेयं करोत्युन्मार्गवर्तिनः ॥१८९॥

८२० सपिंडानामपि व्यक्तशूलवीक्षणतत्परा ।
प्रेततेव नरेंद्रश्रीर्जातिस्नेहापकारिणी ॥१९०॥

८२१ विचारपरिहारेण धावंत सर्वतो जडाः ।
तिर्यंच इव हास्याय प्रसिद्धिशरणा जना ॥२१५॥

८२२ मिथ्यैव नीतिकौटिल्यै क्रियतेभ्युदयश्रम ।
शक्यते परथा कर्तुं न दैवस्य मनीषितम् ॥२२०॥

८२३ शांतापि ज्वलति क्वापि क्वचिद्दीप्तापि शाम्यति ।
दैववातवशाच्छक्ति पुंसः कक्षाग्निसंनिभा ॥२२१॥

८२४ पलायनैर्नापयाति निश्चला भवितव्यता ।
देहिन पुच्छसंलीना वह्निज्वालेव पक्षिण ॥२२२॥

८२५ नाच्छिन्नवह्निविषशस्त्रशरप्रयोगै ।
र्नश्वभ्रपातरभसेनन चाभिचारै ॥
शक्या निहंतुमसवो विधुरे रकांडे ।
भोक्तव्यभोगनियतोच्छ्वसितस्य जंतो ॥२२३॥

४२६ ईर्षामगोपयन्नार्याः शंकामच्छादयन्रिपोः ।
स्वयमन्याभिगम्यत्वं करोति हि जडो जनः ॥२३२॥

४२७ स्वप्नेंद्रजालमायानामप्यनिर्विषया इमाः ।
कर्मवैचित्र्यजनिता काश्चिदाश्चर्यविप्रुषः ॥ २३५ ॥

४२८ गोहत्यंतिकसीमनि प्रतिविधा वीरुद्विपक्ष्मारुह ।
काले प्रावृडुपद्रुताच्छसलिले मूर्च्छत्यगस्त्योदय ॥
स्वर्गच्छेदविधिक्षमाद्युदयतो दृष्ट्वा किलोपद्रवान् ।
संधत्ते प्रतिकारकल्पनमहो दीर्घावलोकी विधिः ॥ २३७ ॥

४२९ शास्तु सर्वार्थसिद्धाख्या यथा सर्वार्थसिद्धिभिः ।
तथा तस्याभिधान्वर्था नात्यजद्बुद्धिशब्दताम् ॥ २४० ॥

४३० मृत्योर्मस्तकपातित्वं तस्याकलयन किल ।
न निष्ठां स्वप्ननिष्ठासु संप्रपेदे व्ययस्थिति ॥ २४९ ॥

४३१ न स्फुरन्नच सम्मीलन्नथवा सुप्त इवानिशम् ।
तेषां चेतसि संकल्पस्तदाप्रभृति सोभवत् ॥ २५९ ॥

४३२ बहुभिर्बहुधा भिन्नैर्बहुकालं विचिंतित ।
न भेदमगमन्मंत्र स चित्रं लोकदुष्कृते ॥ २८१ ॥

४३३ प्रबोधाधायिनो द्वेष्टि नियतिप्रणयी भवन् ।
तपात्ययाहनिद्रांत इव जंतुर्गतस्मृतिः ॥ ३०२ ॥

४३४ पर्याप्तस्यास्य पर्यंते वीरवृत्त्या महौजसः ।
निर्दोषतामीषदगात् निस्त्रिंशत्वजनान्प्रति ॥ ३३१ ॥

४३५ राज्योद्याने नृपतिमधुपा भोगकिंजल्कलोला ।
श्चेतो नानावसनकुसुमश्रेणिभिः प्रणियंत ॥
हा धिग्दैवानिलतरलया पात्यमाना नियत्या ।
वल्लयेवैते किमपि सहसा दृष्टनष्टा भवंति ॥ ३३४ ॥

४३६ तिर्यग्भ्यस्त्रिगज्जयी परिभवं लंकेश्वरो लब्धवान् ।
प्रापाशेषनृपोत्तमः कुरुपति पादाहतिं मूर्धनि ॥
इत्यन्ते बहुमानहृत्परिभव सर्वस्य सामान्यवत् ।
तत्को नाम भवेन्महानहमिति ध्यायन् धृताहंक्रिय ॥ ३३५ ॥

४३७ न हतो नापि निर्दग्धः स केनाप्यवलोक्यत ।
उड्डीयेव गतस्त्वाशु नेत्रनिर्विषयोभवत् ॥ ३४० ॥

४३८ सत्वं साहसासिद्धि च नेतिहासेष्वपि क्वचित् ।
अश्रौषं तादृशं यादृक्तस्यास्तेस्म प्रतापिन ॥ ३४५ ॥

४३९ दावोद्दीपनकूटयंत्रघटनै सिंहादिसंहारिणो ।
यान्त्याकस्मिकगंडशैलपतनैरंतं किराता वने ॥
एकेनैव ननु प्रधावति जनः सर्वोपि मृत्योः पथा ।
हंताहं निहतोयमेष तु मितं कालं विभेदग्रहः ॥ ३५८ ॥

४४० स्वोद्वाहे ललनौघमंगलरवो यैर्हपुळे श्रूयते ।
दीनैस्तैर्दयिताविलाप उदयन्नाकर्ण्यतेन्तक्षणे ॥
ह्योपि प्रन्नहितं प्रहृष्यति परः स्वं प्रंतमंते शुदो ।
दवृत्तं साप्यवलोकयत्यहह धिङ् मोहोयमांध्यावहः ॥ २५९ ॥

४४१ सायं विचिंतितो रात्रौ फलितोन्यत्र वासरे ।
दुर्विपाकप्रदाताभूद्द्रोग्धृणां साहसद्रुमः ॥ ३६० ॥

४४२ चिकुरनिचये यत्कौटिल्यं विलोचनयोश्चया ।
तरलतरता यत्काठिन्यं तथा कुचकुंभयोः ॥
वसति हृदि तद्यासां पिंडीभवन्ननु ता इमा ।
गहनहृदया विज्ञायंते न केश्चन योषितः ॥ ३६५ ॥

४४३ दौःशील्यमप्याचरंत्यो घातयंत्योपि वल्लभान् ।
हेलया प्रविशंत्यग्निं न स्त्रीषु प्रत्ययः क्वचित् ॥ ३६६ ॥

४४४ लोको येष्वद्य केषांचित्तत्व मालोक्य सस्मितः ।
भिक्षामप्यटितुं जाने नैव जानाति योग्यताम् ॥ ३७२ ॥

४४५ गगनं शलभच्छन्नमिव कुर्वन्नथापतन् ।
शरासारो रिपुबलात्सर्वतोच्छिन्नसंततिः ॥ ४०४ ॥

४४६ न मंत्रो नच विक्रांतिर्नकौटिल्यं न चार्जवम् ।
न दातृता न लुब्धत्वं तस्योद्रिक्त किमप्यभूत् ॥ ४१७ ॥

४४७ तद्राज्ये राजधान्यंतर्मध्याह्नेपि मलिम्लुचः ।
लोकं मुमुषुरन्याध्वसंचारस्य कथैव का ॥ ४१८ ॥

४४८ गर्भिणी गर्भपातिन्या तादृशा भयवार्तया ।
छित्राण्यहान्यस्वभावि जनैर्ज्वर इवाखिलैः ॥ ४२९ ॥

४४९ तं या निनिंदानिष्पन्नपौरुषं तत्स्वसुस्तदा
तस्या वह्निप्रवेशेन सिद्धं मानवती व्रतम् ॥ ४४८ ॥

४५० सोल्पोपि राज्यकालोभूद्देवमातंकदुस्सहः ।
दीर्घक्षपादृश्यमानदीर्घदुस्वप्नसंनिभः ॥ ४४९ ॥

४५१ सायं वनस्पतिर्लीनैः खगैर्वाचालितो यथा ।
प्राङ्गणे प्रविष्टे प्रोड्डीननिःशब्दविहगोभवत् ॥ ४७४ ॥

४५२ तेन सिंहासने क्रांते भास्वतेव नभस्तले ।
क्षणादिवाखिलो लोक क्षोभमध्धिरिवात्यजत् ॥ ४८१ ॥

४५३ विकोशशस्त्र सन्द्रोहावेक्षणक्षोभत सदा ।
व्याघ्रलोके व्यात्तवक्त्रो मृगराज इवा भवत् ॥ ४८२ ॥

४५४ भ्रातृद्रुहां कुलछेदमन्विष्यान्विष्य कुर्वता ।
न तेन नीतिनिष्ठेन कि शवोप्यवशेषिता ॥ ४८३ ॥

४५५ जनस्य वीक्ष्य दौर्जन्यमधृष्टाकारतां वहन् ।
स कार्यापेक्षयाप्यासीन्न वाप्याहितमार्दवः ॥ ४८४ ॥

४५६ वस्तुतस्त्वार्द्रहृदय· क्रूरं दमयितुं जनम् ।
अवास्तवं तद्भीमत्वान् भित्तिव्याल इवादधे ॥ ४८५ ॥

४५७ कालवित्समयत्यागी प्रगल्भः प्रतिभानवान् ।
इंगितज्ञो दीर्घदृष्टिः स एवान्यो न कोप्यभूत् ॥ ४८६ ॥

४५८ न भवेत्पविपातेपि प्रमय· समयं विना ।
प्रसूनमप्यसून्हंति जंतो प्राप्तावधेः पुन ५३१ ॥

४५९ ज्वालाभिरौर्वदहनस्य पयोधिमध्ये ।
न म्लानतामपि हि यानि मुहुः स्पृशंति ॥
तान्येव यांतिविलयं किल मौक्तिकानि ।
कांताकुचेषु युवभावभुवोष्मणापि ॥ ५३२ ॥

४६० मृदिम्ना पाप्मिनस्तस्य नाज्ञायि क्रूरता जनै ।
मधुरिम्णा विषस्येव शक्ति· प्राणापहारिणी ॥ ५६४ ॥

४६१ कोश· कृपणवित्तेन प्रविष्टेनेव दूषितः ॥
भुज्यते भूमिपालानां तस्करैरथवारिभिः ॥ ५६६ ॥

४६२ कुर्यादास्थामवष्टंभे कोन्यः पौरुषगर्वित ।
आक्षेपसमये सोपि यत्क्लैब्यं भीरुवद्ययौ ॥ ६०६ ॥

४६३ उत्खातरोपितवपु· क्व नु सोभिमान· ।
कार्पण्यभाक् इतरलोकसमा क्व वृत्ति ॥
यद्वा वशं नस्यति प्रकटं विधातु- ।
रिच्छैवयंत्रगुणपंक्तिरिवात्र जंतुम् ॥ ६०७ ॥

४६४ रूढछद्मप्रतापस्य प्रसादस्य महीभुज ।
अंतःशुद्धिविहीनस्य व्रणस्येव न निश्चयः ॥ ६१३ ॥

४६५ तस्येंद्रविभवस्यान्यत्सामर्थ्यंवर्ण्यते कियत् ।
आययावश्वघासोपि सैन्ये यस्य स्वमंडलात् ॥ ६२९ ॥

६६६ तद्वैधुर्यविधानं तत्प्रजासंहारकार्यभूत् ।
प्रमादाद्भूपतेः क्रुद्धवेतालोत्थापनोपमम् ॥ ६५० ॥

६६७ संप्राप्ता समशीर्षिकां विसदृशैस्तुल्यैर्निरुद्धा दया ।
वैरे विद्विषतां कृता धुरि परं सभ्या बहिस्थापिताः ॥
कार्यान्तेद्भुतकर्मकोशकृतावज्ञाविरागं स्पृशन् ।
सर्पाकीर्णमिवाशु वेश्म गृहिणो भृत्यास्त्यजंति प्रभुम् ॥६६५॥

६६८ आतंकेनोद्वेजितैर्विप्रैः कृतप्रायैः पुरे पुरे ।
वन्हौ हुताग्निभिर्घोरा कुकीर्तिरुदपद्यत ॥ ६५८ ॥

६६९ प्रत्यासन्नाशुभा कंपं भयेन जनता दधे ।
आसन्नवज्रपतना वातेनेव द्रुमावलिः ॥ ६६० ॥

६७० सैनिका शत्रुभिस्तस्य भ्रामितास्तत्र रात्रिषु ।
अरतिं निन्यिरे घोरैः स्वप्नैरिव मुमूर्षवः ॥ ६६८ ॥

६७१ कालस्येवोल्बणस्याथ तस्य सर्वेपि शंकिताः ।
आभ्यंतराश्च बाह्याश्च विरागं प्रतिपेदिरे ॥ ६८० ॥

६७२ प्रविष्टानां युद्धे गहनकविकर्मप्रणयिनाम् ।
प्रसक्तानां द्यूते नरपतिधुरायां विहरताम् ॥
तटस्थत्वे वक्तुं स्खलितमसकृत्सोर्हति परम् ।
प्रयोगे वैकल्यं स्वयमविकलो यो न भजते ॥ ६८२ ॥

६७३ सतां स्यादनुपालभ्यो भजेद्वैमुख्यमेव चेत् ।
द्रोहेच्छया स तु तया ययावग्राह्यनामताम् ॥ ६९० ॥

६७४ नैयाशयित्वमथवोचितकृत्यकृत्त्वम् ।
नीतिप्रियाः प्रतिपदं समुदाहरंतु ॥
मानोन्नतास्तु विहितस्तुतयः कृतज्ञैः ।
त्यक्त्वाप्यसून् परहितं घटयंति संतः ॥ ६९१ ॥

६७५ पट्टं वन्हिस्पर्शज्वलितमहिदष्टात्वचमरेः ।
श्रुतिं यातं मंत्रं पतननिरतां जीर्णवसतिम् ॥
असेवार्हं भूपं व्यसनविमुखं स्निग्धमजहन् ।
अधीरो व्युत्थानोपहतमहिमा शर्म लभते ॥ ६९२॥

६७६ इत्युपायं परित्यज्य न्याय्यं ये प्रभवे क्रुधि ।
द्रोग्धारःकथितास्तेभ्यः केन्ये पापीयसां धुरि ॥ ६९३ ॥

६७७ जन्मन्येकोपकारित्वं पित्रोः सर्वत्र च प्रभोः ।
अधिकाः पितृघातिभ्यः पापिनस्तत्प्रभुद्रुहः ॥ ६९४ ॥

१७८ उद्दीकितिर्गवां वृक्षमूर्धारोहेण भोगिनाम् ।
पिपीलिककुलस्याण्डोपसंक्रांत्यैव वर्षणम ॥ ७६५ ॥

१७९ सिंहे गजाहवव्यग्रे तद्गुहाग्रपरिग्रहे ।
समया ग्रामगोमायोः पौरुषस्यापरास्तु क ॥ ७६५ ॥

१८० सर्वानौचित्यबहल सर्वव्यसनदु सहः ।
सर्वदुःखमय कालस्तस्यावर्तत कोपि स ॥ ७६७ ॥

१८१ शक्तिस्तृणं कुब्जयितुं न यस्य स तदार्थिभिः ।
विसूत्रव्यवहारत्वं निन्ये राजा शठद्विजैः ॥ ७७२ ॥

१८२ विषमे वर्तमानस्य तस्य कश्चित्सनाभवत् ।
अंतर्जहास यो नान्तर्बहिर्यो न तुतोष वा ॥ ७८८ ॥

१८३ संदृश्यते परिवृता चिरमंबरेण ।
रेखा स्वयं न खलु या शशिनो नवस्य ॥
तस्यां जनः प्रकुरुते नतिमंबरार्थी ।
धिग्लुब्धतामपगताम् सदसद्विचाराम् ॥ ७९८ ॥

१८४ त्राणं सिंहनखाद्रुमाद्रिगहनस्यारादरण्यस्य ये ।
तेषां वालगलाश्रयादपि भवेत्कालातिवाह क्रमात् ॥
ये दंता करिणां रणप्रहरणं तेष्याग्रुग्रुर्दीव्यताम् ।
क्रीडायां करताडनानि न दृढा शौर्यस्य रूढि क्वचित् ॥८

१८५ जंतूनां विक्रमत्यागयश प्रज्ञादयो गुणा ।
भवे चित्रस्वभावेस्मिन्नभवेयुरभंगुराः ॥ ८२९ ॥

१८६ भास्वानप्यौग्र्यमृदुतां भिन्नावस्थां दिने दिने ।
तां तामायातिक प्रभावेषु निश्चयः ॥ ८३० ॥

१८७ पुरे स्वर्ग इवास्वदं भोगानामुपलेभिरे ।
दस्यवो ग्रामभोगार्हा पिशाचा इव गव्हरा ॥ ८५६ ॥

१८८ मुग्ध राशि प्रमत्तेषु मंत्रिषूग्रेषु दस्युषु ।
उत्थानोपहतं राज्य नवत्वेपि बभूव तत् ॥ ८६६ ॥

१८९ क्षणाद्वैमुख्यमायांति सांमुख्यं यांति च क्षणात् ।
न हेतुं किंचिदीक्षंते पशुप्रायाः पृथग्जना ॥ ८९६ ॥

१९० युक्तमप्युक्तवांस्तत्र हतोक्तिः शठबुद्धिभिः ।
पौरै स चक्रे नास्त्येव भेषजं विप्लवस्पृशाम् ॥ ९१३ ॥

१९१ निर्धूमस्य विस्तरिण्यो ज्वाला हव्यभुजो दधु ।
संतापद्रुत हेमाभ्रसुवर्णलहरीभ्रमम् ॥ ९८० ॥

४९२ संतापविद्रुतव्योमचारिमौलिपरिच्युताः ।
रक्तोष्णीषा इव भ्रेमुः ज्वालाभंगा नभोङ्गने ॥ ९८१ ॥

४९३ भ्रातॄन् भर्तॄन्पितॄन्पुत्रानालिंग्याक्रंदनिर्भरा ।
भीमीलित दृशो नार्यो निर्दह्यंत वन्हिना ॥ ९८५

४९४ गर्ह्यं पैतामहे देशे किन्नासीत्तस्य चेष्टितम् ।
पितृद्रुहः सतु वधः सर्वप्रीतिकरोभवत् ॥ ९९७ ॥

४९५ यत्कृते क्रियते कर्म लोकांतरसुखांतकम् ।
स मूढैः सुलभापाय कायश्चित्रं न गण्यते ॥ १००१ ॥

४९६ मत्संबधाद्विटपनिवहैर्निग्रहव्यग्रवन्य ।
व्याधप्रत्तानलपरिभवः कोपि नन्वन्वभावि ॥
हाधिग्दंतीविघटनपर सोपि माद्यन्नमीषाम् ।
लभ्यं श्रेयोविधिविधुरितैर्नान्यतो न स्वतोपि ॥ १०३६ ।

४९७ एकाक्षेपे परेपिस्युर्यत्र भृत्या विशंकिताः ।
तत्रापराधे प्राज्ञस्य राज्ञोवश्यैव शस्यते ॥ १०५० ॥

४९८ क्लैब्यकृद्भयमापाते मध्यपातेन तादृशम् ।
करक्षिप्तं यथा शीतं मज्जनेन तथा पयः ॥ १०९७ ॥

४९९ दीर्घोपप्लवयाप्येन दुःस्थित स्वास्थ्यलिप्सया ।
जनोबबंध तत्रास्थां नववैद्य इवातुर ॥ ११२० ॥

५०० स स्त्रीवधं व्यधात्पापीद्वितीयमपि निर्घृणः ।
विशेषः कोथवा तिर्यङ्म्लेच्छतस्करराक्षसाम् ॥ ११३८ ॥

५०१ प्रायश्चाद्यतने काले भृत्यास्तितउवृत्तयः ।
दर्शयंति समुत्सार्य सारं दोषतुषग्रहम् ॥ ११४२ ॥

५०२ धिग्राज्यं यत्कृते सोपि सेहे प्राणान् रिरक्षिषुः ।
मुष्णद्भिश्चौरचांडालप्रायैः परिभवं पथि ॥ ११४६ ॥

५०३ यथैव तेन विश्वस्त स्वामी द्रोहेण वंचित ।
तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ॥ ११६३ ॥

५०४ वन्हिदानमहायोधसंहारार्द्यैरुपद्रवैः ।
एकमेकमहस्तत्रानेहस्यासीद्भयावहम् ॥ ११६६ ॥

५०५ अतपत्तरणिस्तीक्ष्ण मभक्षिणं भूरकंपत ।
ववुर्द्रुमाद्रीन्भिंजंतो महोत्पात प्रभंजना ॥ ११६७ ॥

५०६ पवनोत्थापितैः प्रांसुकूटैर्दध्रे मदोद्धत ।
व्योम्नि प्रोत्तंभनस्तंभभंगिनिर्घातदारितै ॥ ११६४ ॥

५०७ न भूमिर्न दिशो नद्यो धूमध्वांते व्यभाव्यत ।
हुडुक्कामुखचर्माभो दृश्यादृश्योभवद्रवि ॥ ११७३ ॥

५०८ धूमांधकारसंछन्नास्ततः प्रज्वलिताग्निना ।
अपुनर्दर्शनायेव मुहुराविष्कृता गृहा ॥ ११७४ ॥

५०९ मज्जनावासनौसेतुकदंबे ग्रोषशंकया ।
अपास्तैर्नगरस्यांतर्ययुर्नद्योपि शून्यताम् ॥ ११८२ ॥

५१० पुरं दग्धं स्वमुत्सन्नं प्रजा नष्टाश्च चिंतयन् ।
आसन्नं मरणं राजा निर्विण्णो बव्हमन्यत ॥ ११८७ ॥

५११ को नाम मानिनां पंक्तौ प्रविष्टोंते निजां भुवम् ।
असिक्तां स्वांगरक्ताक्तां व्याघ्र क्रान्तिमिवोज्झति ॥ ११९२ ॥

५१२ अल्पसैन्यो द्विपत्खड्गमंडलप्रतिबिंबितः ।
नृप साहाय कायातविश्वरूप इवाबभौ ॥ ११९९ ॥

५१३ बिंबितज्वलनज्वाला । सर्व एव महाभटा ।
हंतव्याश्च हताश्चासन्नस्त्रस्रोतोरुणा इव ॥ १२०२ ॥

५१४ जाग्रन्स्वपंश्चलंस्तिष्ठन्सन्नश्नन्नथ सोरिभिः ।
निर्गच्छान्नित्यमाहूतो न कैरुद्बाष्पमीक्षितः ॥ १२०५ ॥

५१५ एकांतवामहृदयो विधिरानुकूल्यम् ।
मिथ्या प्रदर्श्य विशिनष्ट्यनुबंधिदु खम् ।
अंधीकरोति भृशमभ्रमगं ज्वलंतंमू ॥
भास्वन्महौषधिभिदे प्रकटय्य वज्रम् ॥ १२१६ ॥

५१६ वात्सल्येनान्वितं प्रेम गौरवेन प्रियं वचः ।
औचित्येन च दाक्षिण्यं सापत्यमिव या दधे ॥ १२१८ ॥

५१७ विनोदशून्यनिर्विण्णलोकयात्रं जगद्विदन् ।
प्राणैराज्येन वा कृत्यं न स किंचिन्निरश्यत ॥ १२२० ॥

५१८ आहवाव्हानसंरंभै शोकाविस्मृतिकारिण ।
राज्ञोद्विष कार्यवशादुपकारित्वमाययु ॥ १२२६ ॥

५१९ धिग्राज्यं यत्कृते पुत्रा पितरश्चेतरेतरम् ।
शंकमाना न कुत्रापि सुखं रात्रिषु शेरते ॥ १२४३ ॥

५२० पुत्रपत्नीसुहृत्भृत्या येषां शंकानिकेतनम् ।
विस्रंभभूर्भूपतीनां कस्तेषामिति वेत्ति कः ॥ १२४४ ॥

५२१ असुखत्रासदारिद्र्यप्रियनाशादिवैशसै ।
स राज्यकालः सर्वस्य परितापावहोऽभुत ॥ १२७३ ॥

५२२ नरः पौरुषनैष्ठुर्यशठत्वेन करोति किम् ।
विधातृवृत्तिवैचित्र्यपराधीनासु सिद्धिषु ॥ १२७४ ॥

५२३ पुरोभूतं कंचित्परिहरति राशिं तम इव ।
व्यतीते कस्मिंश्चिद्धारिरिव विवृत्यास्यतिदशाम् ॥
स्वमुल्लंघ्यासन्नं क्वचन नृपतिर्दर्दुर इव ।
क्रमेत्स्रष्टुर्दृष्टं स्फुटमिति गतीनामनियम ॥ १२७५ ॥

५२४ विरुद्धे बंधुधीर्दृष्टे हिंसारंभेऽपि संभवेत् ।
आसन्नजीवितांतस्य जंतोर्नो सूना पशोरिव ॥ १२८८ ॥

५२५ स शापो गांधार्यास्तदपि सरुषो भाषितभृगे ।
न उत्पाताश्चक्षुस्स्वमपि तदभीमं प्रकटयत् ॥
कुलांतं तत्त्राणाक्षममकृत वैकुंठमपि तत् ।
विदन्नप्यन्यत्वं क इव भवितव्यस्य कुरुताम् ॥ १२८९ ॥

५२६ मेने वैदेशिकप्रायानात्मानपि धृतभ्रमः ।
पुण्यक्षये विपातितुर्वैमानिक इवांम्बरात् ॥ १२९५ ॥

५२७ अयमेव स कालस्य बलात्कवलनग्रह ।
विदंतोऽपि यदायांति जंतवः कृत्यमूढताम् ॥ १२९७ ॥

५२८ न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयन् ।
मृतं हतं लुंठित वा प्रचलन्स हिमेध्वनि ॥ १३४३ ॥

५२९ न कोऽपि शस्त्रभृत्सोऽभूत् स्मृत्वा मानोन्नतिं पथि ।
परैराक्षिप्यमाणो यः शस्त्रं वस्त्रं च नात्यजत् ॥ १३४४ ॥

५३० कोशैस्सद्धंशतां वीक्ष्य कुर्वतः सत्क्रियां गतः ।
धिग्भवंतश्चशास्त्रंच तातस्यान्ते विपर्ययम् ॥ १३६० ॥

५३१ मत्तवेताल मालेव कालराज्याकुलेव च ।
बभूव सा यामवती सर्वभूतभयावहा ॥ १३६९ ॥

५३२ अन्यथा कलितो लोकैरन्यथा दैवयोगतः ॥
इत्थं राज्ञोर्द्वयोरासीद्विजयावजयक्रम ॥ १४०० ॥

५३३ कंचिन्निपातयति बद्धपदं क्षणेन ।
कंचित्परं विपातिषुं नयति प्ररूढिम् ।
संकल्पनिर्विषयचित्रतरानुभाव ।
ओघोंभसामिव तटं पुरुषं विधाता ॥ १४०१ ॥

५३४ येषां प्राणपरित्यागे निश्चयं बध्नतामपि ।
न योग्य कालापेक्षास्ति किं तैर्हिंस्रपशूपमैः ।। १४१२ ।।

५३५ प्रस्थिते पथि के कस्माद्यंत्रेपृत्सादयन्वने ।
आयुःशेषो मृगेंद्रस्य विदध्यादध्वशोधनम् ।। १४२१ ।।

५३६ ज्यायसि भ्रातरीवायं तस्मिन्प्रामे जहौ नृप ।
दुःखोष्णैरश्रुभिः सार्धं वैरिव्यापातसाध्वसम् ।। १४२६ ।।

५३७ पाते वनस्पतेः शाखा इव तन्नीडाविच्युता ।
इत्थं हता क्षताश्चासन्स्तत्र तत्र नृपानुगा ।। १४३३ ।।

५३८ किं राज्येनाथवा कृत्यं भोगमात्रोपयोगिना ।
जिगीषोरुच्चितं कस्य ममेवान्यस्य सेत्स्यति ।। १४५१ ।।

५३९ क्रियते येन नियतैरन्यथात्वं सनाथताम् ।
विनिहस्य हरेर्दंष्ट्राः कुर्वंतो यत्र जंबुकाः ।। १४७० ।।

५४० यथा प्राप्तिभ्रंशा धरणिपतिभावस्य विविधाः ।
यथा न्हासोल्लासा अपि समरसीमासु बहुशः ।
यथा तत्तद्दीर्घव्यसनविनिपातानुभवनम् ।
तथा दृष्टस्तस्य प्रमयसमयोप्यद्भुततरः ।। १४७२ ।।

५४१ निन्हुतेशित्वसदृश[illegible]तिधूर्तो महीपतिः ।
आहारमप्यनासाद्य तन्मतं न न्यषेवत ।। १४८६ ।।

५४२ भोगलोभोज्झितोच्चित्य दस्युसंघचिकीर्षितम् ।
देशेत्र पापात्पापीयो दैवान्न समपादि तत् ।। १४९३ ।।

५४३ दास्येप्ययोग्यो यो राज्ये स इत्यास्तां त्रपान्यतः ।
शक्येत पातुं देशोयं किमीषदपि तादृशा ।। १४९४ ।।

५४४ शालीन्पलाल पुरुषोवति यः कृशानु
दग्धानन श्वटकपेटक भीतिदानैः ।
त्रातुं स काननतरून्विहितो विदध्यात्किं
तत्र भंजनकृतां वनकुंजराणाम् ।। १४९५ ।।

५४५ अंतःपाते साहसानां नाद्भुतं ताद्विधैर्वशात् ।
जीयते लक्ष्यमेकेन लक्षेणैकाथवा युधि ।। १४९९ ।।

५४६ सटां हरेः फणारत्नमहेज्वालां हविर्भुजः ।
बालां च तस्य संस्पृष्टुं कोप्रशांतस्य शक्नुयात् ।। १५२८ ।।

५४७ त्रिगर्तेषु दया शीलं चंपायां मद्रमंडले ।
त्यागो दार्वाभिसारे च मैत्री ना मर्त्यधर्मिणाम् ।। १५३१ ।।

५४८ बद्धमूलो नातिदूरे सर्वभारसहो रिपु ।
सबाह्याभ्यंतरा मंत्रिसामता वैरिसंश्रिता १५४६ ॥

५४९ मंत्रोपदेशो वृद्धस्य नैकस्यापि नृपास्पदे ।
अधर्मबहुलासर्वे भृत्या ऐहिकवृत्तयः ॥ १५४७ ॥

५५० प्राप्तप्रसंगात्तदिदं गुणग्रामोपवर्णनम् ।
वक्ष्यमाणं सुबहुशो यत्र लेशात्प्रदर्श्यते ॥ १५४९ ॥

५५१ हितानां दाराणां सदृशसुखदु खस्य सुहृदः ।
कवे सोल्लेखस्य प्रियसकललोकस्य नृपते ।
स्थितानां कोप्यत्र व्यवहितविवेकः स्वकृतै-।
रसामान्यं ज्ञातुं सुभगमनुभावं न कुशल ॥ १५५३ ॥

५५२ विकास केषांचिन्नयनविषमैर्विद्युदुदयैः ।
परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः ।
न चेष्टा काप्यन्योपकृतिपरिहीना जलमुचो ।
जडो वर्षादन्यं गणयति गुणं नास्य तु जनः ॥१५५६॥

५५३ गुणान्लोकोत्तरानभृण्वन्नस्यानुभवगोचरान् ।
भविता पूर्वभूपालकृत्ये सप्रत्ययो जन ॥ १५५७ ॥

५५४ सह स्ववृद्ध्यै समशीर्षिकाप्रभो- ।
र्नयुज्यते प्राप्त समुन्नतेः क्वचित् ॥
श्रितोन्नतेर्दर्दुरवृंदलंघनां ।
सरोजखंडस्य महाविडंबना ॥ १५७४ ॥

५५५ कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ ॥
प्रस्थितस्य पुरोवाते रथस्येव ध्वजांशुकम् ॥ १५९० ॥

५५६ आरंभमात्रमपि कस्यचिदेव सिद्ध्यै ।
कश्चित्प्रयत्नपरमोप्यफलप्रयासः ॥
मंथाद्रिणामृतमवाप्युदधिर्मुहूर्तात् ।
सक्ति चिराद्धिधृता न हिमाद्रिजेन ॥ १५९१ ॥

५५७ भ्रष्टा सरित्स्ववसतेर्जलधिप्रवेशे ।
वेलोर्मिवेल्लनवशेन विवर्तमाना ।
मिथ्येव यच्छति श्रियं पुनरुद्धृतेति ।
नोत्थानमस्ति तु विधिव्यपरोपितानाम् ॥ १५९२ ॥

५५८ तस्य तावन्महायत्नकठोरस्योदयक्षणे ।
सिद्धेर्विबंधो विधिना विधुरेण व्यधीयत ॥ १५९३ ॥

८५९ पूर्वप्रजासृज इवाद्भुतवस्तुतत्व- ।
व्यावर्णनेन कुतुकं जनयंति तज्ञा ॥
बाला इवाल्पमतिहार्यधियश्च संति ।
प्रायो नृपानियमशून्यमनोनुभावा ॥ १६११ ॥

८६० शौचस्थाने कृतवसतिभिः स्त्रीत्यवायालये वा ।
नि शस्त्रो यच्छलनकुशलैर्मानसं सप्रविश्य ॥
नीतो भूतैरिव विवशतां निर्भरं नर्मचेटै- ।
र्मद्रं भूपात्कथमिव तत स्यादवप्रभ्य चेष्टात् ॥ १६१२ ॥

८६१ निर्हेतुः प्रहसन्विटः प्रविशति क्षोणी पतेरंतिकं ।
प्रीत्युत्फुल्लदृगेप किं किमिति तं पृच्छत्यनच्छाशयम ।
ब्रूते किंचिदसौ कचानथ कपन्सर्वंकपन्मानिनाम् ॥
मानप्राणगुणेषु यत्सरभसं दंभोतिपातायते ॥ १६१३ ॥

८६२ स विभ्रमगतागतः किमपि भाषमाण श्रुतौ ।
प्रभोर्वलितलोचनं जगदवज्ञयालोकयन ।
निजस्य मुखविक्रियाप्रणयताडनाद्यैर्विदन् ।
अनुग्रहमिवाहितं नृपतिवल्लभो दुस्सहः ॥ १६१४ ॥

८६३ अपि जातु स दृश्येत निस्संक्षोभमतिर्नृपः ।
यो यत्रपुत्रक इव व्यक्तं धूर्तेन नृत्यते ॥ १६१५ ॥

८६४ यतो भृत्यांतराज्ञानाज्जात सर्वस्व संक्षय ॥
तत्प्रजादुष्कृते राज्ञा हा धिक्नाद्यापि शाम्यति । १६१६ ।

८६५ कर्तुं पदव्यां योग्यानामयोग्यान्प्रभवेन्न क ।
तेषां गुणैस्तान्संयोक्तुं न शक्यं कारणैरपि ॥ १६३७ ॥

८६६ पदे श्रीखंडस्यानुचितमुचिते वर्ष्माणि निजे ।
नृपांकः प्रक्षेप्तुं प्रभवति चिताभस्मरभसात् ।
नतत्स्वेच्छायत्तत्रिजगदुदयापायघटतो- ।
प्यसौ तद्गंधेन स्फुटमिह पटुः संघटयितुम् ॥ १६३८ ॥

८६७ दग्ध्वा तृणं तनुघनं प्रतनोति शष्पां ।
वृष्टिं सृजत्युपचितोष्म दिनं प्रदर्श्य ।
वैचित्र्यसंस्पृशिविधेर्नियमेन कृत्ये ।
न प्रत्यय क्वचन चंचलनिश्चयस्य ॥ १७९० ॥

८६८ कृत्यं निर्वृत्य विश्रांत्यै धीरस्याबध्नतो मन ।
विधिर्विधत्ते दीर्घान्यकार्यभारसमर्पणम् ॥ १७९१ ।

५६९ आरोढुं प्रथमस्य दीर्घदमनप्रत्तक्रमस्यांघ्रिणा ।
नो संत्यज्यत एक पादकटको यावद्वितीयोखिल· ।
वाहस्यासनरक्षिण कलयतो भागावतारात्सुखा ।
न्यारोहेण परेण तावदसहाधिष्ठियने पृष्ठभू ॥ १७९२ ॥

५७० नियतं निरुपादानां शक्तिं दर्शयितुं जने ।
नानोपकरणग्रामं संन्नद्धोस्याछिनद्विधि ॥ १८१२ ॥

५७१ अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपते ।
कोऽमुष्य बहु मन्येत साभ्ये सातिसंपदाम् ॥ १८१२ ॥

५७२ यद्वानौचित्यदुष्पांसुवर्षदूषितकीर्तिना ।
भोगलुब्धतया तेन हता विततसत्वता ॥ १८६२ ॥

५७३ इमा व्योमांगनाक्रीडत्तरलविभ्रमा ।
भाग्यमेघानुयायिन्य स्थायिन्यः कस्य संपद· ॥ १८९६ ॥

५७४ छाया निरंकुशगतिस्त्वयमानपस्तु ।
छायान्वित शतश एव निज प्रसंगम् ॥
दुःखं सुखेन पृथगेवमनंतदु ख ।
पीडानुवेधविधुरा तु सुखस्य वृत्तिः ॥ १९१३ ॥

५७५ निस्स्नेहत्वस्य भूपालसुलभस्य विजृंभितम् ।
मोहनी वा श्रिय शक्तिर्यदज्ञासीत् पुन सुखम् ॥ १९१७ ॥

५७६ सपत्नसादहितसाद्यदि वा वन्हिसाद् भवेत् ।
द्रविणं क्षोणिपालानां जननोपद्रवार्जितम् ॥ १९५१ ॥

५७७ उत्सारणप्रियतया परिरुद्धसर्वं ।
द्वारं गृहे निरनुरोधतया वसतः ॥
संपल्लघूकृतधियोप्रतिपद्यप्रवृत्तो ।
धिग्जानते न रभसाञ्चियतेर्निपातम् ॥ २००० ॥

५७८ कुर्वाणोत्सारणं तस्य गृहजा सततं नृणाम् ।
नाज्ञासीत्सुखसुप्तस्य पृष्ठे पतितमंतकम् ॥ २००१ ॥

५७९ ज्वरितः स हिनिष्ठ्यूतज्वरः स्वपिति विज्वरः ।
विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा ॥ २००२ ॥

५८० जतुसंहतयो काचकलशीदलयो रिवा ।
क्षणे क्षणे संधिभंगस्तयोः समुदपद्यत ॥ २०११ ॥

५८१ दाता शिखामृतरुचेरमृतांविलब्ध ।
कारुण्यकृत्समिति लूनशिरा कृतश्च ॥

ईशेन तत्र यदकार्यदुपकारकर्तुं ।
तत्रापरः क इव संनिहितर्द्विजिव्हः ॥ २०२५ ॥

५८२ मुक्ता इमा इति जलं नलिने पुलीनम् ।
ज्ञातृत्वमेतदिति जाड्यमिनेषु लग्नम् ॥
यज्जायते किमपि हंत विमोहिनी सा ।
शक्तिः श्रियः स्फुरति कापि तदाश्रया वा ॥ २०२६ ॥

५८३ घ्नन्त्यद्भुतप्रहरणा विपिनेषु केपि ।
घ्राणेन केचन दृशाथ रसज्ञयान्ये ॥
ते केपि संति तु नरेंद्रगृहेषु हिंस्रा ।
वा चैव ये विरचयंति किलोपघातम् ॥ २०२७ ॥

५८४ ज्योती रसाश्मन इवाश्रितमीश्वरस्य ।
निर्दग्धुमिंधनमिवग्रगतं न शक्ता ॥
पश्चात्भवेद्यदि स तत्प्रसृतावकाशाः ।
कुर्युः खला रविकरा इव भस्मशेषम् ॥ २०२८ ॥

५८५ राजाभवन्परः कोस्तु स्वविचारदृढाक्रिय ।
ग्रोपि शिशुवत् भूभृद्यत्र धुर्तैः प्रनृत्यते ॥ २०३२ ॥

५८६ शैशवे बालिशप्रायैः संस्तुतं जाड्यमर्पितम् ।
प्रौढावपि न वा यायात् राज्ञः कार्ष्ण्यं मणेरिव ॥ २०३३ ।

५८७ भृत्यान्तरापरिज्ञानमात्रेण जगतीभुजाम् ।
निरागस्ते वज्रपातः कष्टं राष्ट्रस्य जायते ॥ २०३४ ॥

५८८ अल्पेन हेतुनोद्भूतं द्वैतं तेषां च तस्य च ।
खलपैशून्यसेकैस्तत्प्रापाशु शतशाखताम् ॥ २०६५ ॥

५८९ अतथ्यं तथ्यवद्वस्तु तथ्यं वातथ्यवन्नृप ।
य पश्येन्मूढवत् सोयैस्त्यक्तोनर्थैः कदर्थ्यते ॥ २०८३ ॥

५९० रत्नज्योतिर्हुतवहधिया त्यज्यते इष्टिपातः ।
द्यावाक्षाणामितरविषयः स्वस्य संभाव्यते च ॥
वस्त्वेकैकं यदिह न मृषा यन्मृषा नत् ।
तच्छेनेत्थं किमिव न जनैर्दृश्यते तत्वशून्यैः ॥ २०८४ ॥

५९१ दुर्गमो भूमिभृन्मार्गो विटैर्हरत्नृपैरिव ।
क सनीतिज्ञ विज्ञेयः क्व ते खलबुद्धय ॥ २१०७ ॥

५९२ तन्वाना व्रतवैमुख्यं रसनालौल्यशालिनः ।
परपिंडोपहर्तारः खला कौलेयका अपि ॥ २१०८ ॥

५९३ इत्थं खलोपतापेन प्रयुक्तं तद्भयात्पुनः ।
असंहार्यं कुकर्मेदं पश्चात्तापाय नो भवेत् ॥ २१०९ ॥

५९४ शोभोपयोगिनो भर्तुर्नित्यं सततसेवकाः ।
कर्तुं साहससाचिव्यं विदूरेण तु पार्यते ॥ २१२१ ॥

५९५ करे पिनाको मकरांकशत्रोः ।
शोभाविशेषाय सदानुषक्तः ॥
पुराऽऽहवे कार्मुककर्म तस्य ।
तत्कालमात्रेण तु मंदरेण ॥ २१२२ ॥

५९६ पीतामृतस्य क्षतविग्रहत्वं न प्राभविष्यद्यदि नाम राहोः ।
अज्ञास्यदिच्छां न ऽमुष्यलोक सामर्थ्यभाज सुचिरप्ररूढाम् २१७०

५९७ वेतालोत्थापनाच्छ्वभ्रलंघनात् विषचर्वणात् ।
व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनम् ॥ २१८७ ॥

५९८ अनात्मायत्तनिस्तीर्णगुणानां चक्रवार्तिनाम् ।
शकटानामिवाग्रस्थो विश्वस्तः को न भज्यते ॥ २१८८ ॥

५९९ किं वाच्य स नरव्याघ्र प्रवृद्धिं याति संगरे ।
निजवर्म तनुत्रादि यस्य मानिन वर्ष्मणि ॥ २२०७ ॥

६०० काले संहननं रात्रिजागरः सामतो बले ।
समये ग्रहणत्यागतत्तच्छक्तिविकल्पनम ॥ २२१० ॥

६०१ लब्धभूम्यपरित्यागो जिगीषोर्गीद्दशोगुणौ ।
चलेगुरग्योप्यस्य का वैर्याक्रमणे स्तुतिः ॥ २२१२ ॥

६०२ छंदानुवृत्यामात्यानां यत्र क्ष्माभृदुपेक्षते ।
कस्तत्रान्यस्तु दीनानामापच्छमयिता विशाम् ॥ २२३० ॥

६०३ यद्वा न्यायोयमन्योन्यस्पर्धया यदुपप्लुतम् ।
शमिता दंडयेच्छाम्यं शमितारं परोथवा ॥ २२३१ ॥

६०४ विशृंखलं नयेच्छम्यां दार्ढ्यसारं विघट्टनं ।
कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ॥ २२३२ ॥

६०५ धर्मं सर्वोपकार्येकक्षुद्रक्षपणमुच्यते ।
जघानाजगरं सोपि जंतूनामंतकं जिन ॥ २२३४ ॥

६०६ दुर्वृत्तदमनेस्माभि कृते तेजस्विनो जनात् ।
भूयोप्यधिकृतो बिभ्यन्न कश्चित्पीडयेत्प्रजाः ॥ २२३५ ॥

६०७ कायस्यास्य परित्यागादनंता जंतवो यदि ।
सुखिनः स्युरसौ भ्रातर्वणिज्या ज्यायसी न किम् ॥ २२३६ ॥

६०८ कालेस्मिन्धर्मदौर्बल्यकलुषेपि कले किल ।
प्रभावो भूमिदेवानां द्योततेद्याप्यभंगुर ॥ २२३८ ॥

६०९ ब्राह्मणैरपरिक्षिणिपूर्णपुण्यो न कश्चन ।
धैर्यमारभते भ्रष्टदुष्टोत्पाटनपाटवैः ॥ २२३९ ॥

६१० परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ २२५६ ॥

६११ लब्धालिखिततत्कृत्यकारणा पत्रिका करात् ।
तस्यांतसमयाशंसा श्लोकेनानेन पावनी ॥ २२५७ ॥

६१२ गंगा श्रुमार्गत्रुठिता जठरात्कथंचि ।
देकस्य संहृतवनो निसृता महर्षे ।
ग्रस्ता परेण कृतसागरगर्तपूर्तिः ।
शक्तो न कोपि भवितव्यविलंघनायाम् ॥ २२८० ॥

६१३ शोभते रुधिरताम्रमंडलाग्रो यथोदये ।
तथा योस्तमये भास्वानिव वंद्य स भूपतिः ॥ २२८८ ॥

६१४ गणना काथवा बालबालिशादा विधीयते ।
न चित्तवृत्तेरैकाग्र्यं महतामपि सर्वदा ॥ २३०४ ॥

६१५ जीवद्यापद्गतस्वामिवीक्षित श्लाघ्यविक्रमः ।
स एवास्पृहणीयांतक्षणो वरिष्वगणयत ॥ २३३० ॥

६१६ श्वेतछत्रांशुपृक्तेव चिंतापांडुरवर्तत ।
बंदीकृता नरेंद्रश्रीर्निर्निद्रा यस्य मंदिरे ॥ २३४९ ॥

६१७ हास्यावहोप्यविकृतो विकृतोनपास्यो ।
दुर्गंधिरप्यतिजडोपि गृहीतवाक्य ॥
पूर्वानुभावजयिनो भवति प्रभावात् ।
यस्य स्तुमस्तमतिसंस्तवमप्रतर्क्यम् ॥ २३५६ ॥

६१८ निर्धैराद्यूतनाधैर्यश्चेष्टितैः प्रागभीष्टताम् ।
बाले दुर्ललितस्यागाद्भूभर्तुश्चित्रचेतस ॥ २३५७ ॥

६१९ नर्मांगतायां निस्सारो जातो यः सोधिकारभाक् ।
अचिंत्यकृत्यकार्यासीत्स्वामिस्नेहप्रभावत ॥ २३६६ ॥

६२० केलीसज्जैर्युवतिकरजै कंठभूपादशायाम् ।
यस्याज्ञायि त्रुटनमसकृत् क्ष्माधरेष्वासक्तष्टौ ॥
सोप्यादिष्टस्त्रिपुररिपुणा प्राप भंगं न भोगी ।
शक्त्याध्यायी क्वचन न परो भर्तुराज्ञाप्रभावात् ॥ २३६७ ॥

६२१ सोल्लिखप्रतिभोन्नीततत्वानां हास्यवस्तुनि ।
कथाशरीरं पर्याप्तं नेदृशां किमचेतसाम् ॥ २३७४ ॥

६२२ यस्सर्वंकषनिष्कंपशेमुषीक क्षमापति ।
धुर्यतां धर्मचर्याभिर्गत सुकृतशालिनाम् ॥ २३७६ ॥

६२३ लब्धबोधिरिवारिर्यश्चक्रे व्यापद्युपक्रियाम् ।
दावप्रदस्य दग्धांगोल्लाघत्वमिव चंदन ॥ २३७७ ॥

६२४ विश्वाप्यायनसप्तसिंधुभरणं ब्रह्मादिसंप्रीणन-
प्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा ॥
स्व सिंधोर्लघुतां गतं सगरजश्रेणीचितास्पर्शनात् ।
पूता येन जना स्मशानमिव सा योग्या किलात्स्नां स्थितौ २३८२

६२५ विपक्षावरणाप्राये प्रायेण पृथिवीभुज ।
तैक्ष्ण्यमायांति जीमूतमुक्ता रविकरा इव ॥ २३८५ ॥

६२६ परिणाममनोज्ञत्वं राजरत्नं त्वयं नृप ।
माधुर्याधिक्यमुत्पाको द्राक्षाद्रुम इवाययौ ॥ २३८६ ॥

६२७ संविभेजे स्वसंभारैः स क्रियाधर्मचारिणाम् ।
तेजोभि· कुलशैलानामोषधीरिव चंद्रमा ॥ २३८८ ॥

६२८ पुष्पाकरप्रणयभू सुभगा विभूति ।
रंकस्य हंत करवीरतरोर्द्रुमेषु ॥
पुष्पाणि यस्य सफलीकुरुते स्वयं तत् ।
प्रादुर्भवत्किमपि लिंगमनंगशत्रोः ॥ २४२८ ॥

६२९ अपूर्वमंडलारब्धाबाटोपाद्रामशालिन ।
क्व सर्वंकषनिष्कंपप्रतिभा कार्यवेदिन ॥ २४६२ ॥

६३० क्व बालबालिशप्रायो नग्नव्ययवहृतिर्जन ।
धिक्परीपाकविषमं स्वाच्छंद्यं मेदिनीभुजाम् ॥ २४६४ ॥

६३१ आसीदाचमनोपयोगि कलशे स्रष्टुर्जगल्लंघन-।
क्रांतांघ्रिक्रमहार्यथासुररिपोस्त्रैस्रोतसं यत्पय· ॥
शंभुस्तन्निदधे स्वमूर्धनि जडेप्येकप्रयुक्तादृतो ।
स्युस्सर्वेप्यवशा गतानुगतया गाढादरात्स्वामिन· ॥ २४७९ ॥

६३२ एकाकी य किल न भजते मूढतां भर्तृकार्ये ।
नौदासिन्यं श्रयति च रुषा बव्हधीने च तस्मिन् ॥
निर्हेवाकव्यवहृतितया साध्यासिद्धिं किलेच्छन् ।
तादृक्मंत्री प्रभवति परं नाल्पपुण्यस्य राज्ञ ॥ २५०४ ॥

६३३ देशे भूरितुषारगौरहिमर्तौ भाग्यसंपदा ।
भुभर्तुरभियोग्यैव भूरमूढानुभूषिता ॥ २५११ ॥

६३४ वैदग्ध्यदिग्धमनसामयमेक एव ।
कोप्यस्ति वंचनविधेरुचित प्रकार ॥
येनात्मना किल विशंकितशक्तयस्ते ।
मुग्धेपि वैरिणि विचारहतोद्यमाः स्यु ॥ २५२२ ॥

६३५ प्रवादमात्रसाराद्यस्त्रसेत्पारिकरादरे ।
स्वयेव तस्य विघ्न्येत सिद्धिर्श्चितांधया धिया ॥ २५२३ ॥

६३६ विघ्येदाशु शिलीमुखे प्रावितरेत्पत्रैरवस्कंदनम् ।
बध्नीयात्तदिदं गुणं परिकरैर्मिथ्याग्रसिद्धैरिति ॥
स्याच्चेदंबुरुहं द्विपस्य भयकृच्चिंत्यतासहैस्साहसम् ।
प्रत्यूहेत ततो निजैरपग्रनेरप्येत दुन्मूलने ॥ २५२४ ॥

६३७ प्राप्तव्यं प्राप्तवान्सर्वो निजैः कृत्यै शुभाशुभे ।
क्रियातिपत्तिर्लोकेत्र त्रैलोक्यं तु मुखेर्प्यते ॥ २५४७ ॥

६३८ पादेषु पक्षेषु च सत्सु नोर्व्यां न व्योम्नि वा पक्षपिपीलिकस्य ।
पंगवंधवच्चंक्रमणं तु गर्ते किं संपदास्याभिगमे गतीनाम्॥२५४८॥

६३९ सहस्रपादस्य गतोर्निमित्त- ।
मनूरुभावेप्यरुणः प्रजातः ॥
तस्याभविष्यद्यदि पादयुग्मम् ।
ततोधिकं तत्किमिवाकरिष्यत् ॥ २५४९ ॥

६४० अविश्रांतो वातो दहन इव सोयं जनयति ।
प्रसक्तिं सातत्याद्धलयति कुलाद्रीनपि जलम् ॥
प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा ।
फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥ २५५१ ॥

६४१ प्रिया मन्युः सरागेण मृत्युहेतुर्महानपि ।
हृदि विस्मर्यते पृष्ठे शरभेणेव वारण ॥ २५७५ ॥

६४२ प्रबंधं निर्बध्नन्नरिमुपचरंश्छादितरुषम् ।
महार्हं संगृण्हन्नयकुटिलचेष्टं व्यवहरन् ॥
स भूमिस्सिद्धीनादधदुचितकर्तव्यपरताम् ।
भवेद्योनिर्व्यूढावपि सुदृढसंरंभरभस ॥ २६०६ ॥

६४३ उपन्यास्यंस्ततस्तस्य म्लानिप्रक्षालनक्षमम् ।
मानिन केपि कर्तव्यं कीर्तिव्ययनिवर्हणम् ॥ २६२० ॥

६४४ कालः सोयं सकलजनतालोचनध्वांतदायी ।
नित्यालोकप्रकटनपटुः किंतु सत्क्षत्रियाणाम् ॥
अभ्रश्यामाद्भुतमसिलता स्ववंधूसंगतापि ।
व्यक्तं साक्षि दिशति रभसान्मंडलेनोष्णभानो ॥ २६२१ ॥

६४५ संप्राप्नुवंति ननु मंडलमेकमेव ।
क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा ॥
चंडांशुमंडलमथाभिमतानि कामं ।
प्रेमार्द्रनिर्जरवधूकुचमंडलानि ॥ २६२२ ॥

६४६ नास्मिन्संततवेष्टनोल्बणतलैस्तल्पैरुदेति व्यथा ।
ग्रंथिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जन्यते ॥
क्रंदद्बंधुजनार्तनादचकितस्वांतं न वा स्थीयते ।
नन्वेतन्मरणं सुखस्य सुभगा काप्येव संप्राप्तिभूः ॥ २६२३ ॥

६४७ मार्गैः खड्गलतावितानगहनैर्यात पिता ते दिवम् ।
भ्रातृभ्यामसिधेनुकंटकवने भ्रांत्वा जिता सद्गति ॥
वंशक्षुण्णमिमं निषेव्य रभसादध्वानगुन्नद्धया ।
वृत्या व्योम्नि विशार्कमंडलमिहस्वांत च तेजस्विनाम् ॥२६२४॥

६४८ साम्राज्यं विधिनोपनीतमसकृत क्लैब्येन यद्धारितम् ।
तत्रापि प्रशमोचिते वयसि यत्संचेष्टितं बालवत् ॥
प्रायश्चित्तममुष्य लब्धमधुना तद्बंधसापादितम् ।
माभूद्राज्यभिवैतदप्यसुलभं कर्तव्यमूकस्य ते ॥ २६२५ ॥

६४९ राज्यं प्राप्तमपि प्रनष्टममुमोच्छिष्टाशनैर्भापितः ।
कालः सर्वजनक्षयस्य विषये याता स्थितिर्हेतुताम् ॥
इत्यासीत्किमिवोचितं प्रभवतो भिक्षाचरक्ष्मापते ।
निर्व्यूढं तु तदस्य देहविरतौ येनैव सर्वोन्नत ॥ २६२६ ॥

६५० स तथोत्तंजितोप्योजो नाददे तेजसोज्झित ।
न ज्वलत्यग्निसंगेपि निर्वीर्यं वानरेंधनम् ॥ २६२७ ॥

६५१ नायाति वाडवशिखिक्रथनेन तापम् ।
शैत्यं हिमाद्रिपयसा विशतां न चाब्धिः ॥
कश्चित् गभीरमनसां सततं विषाद ।
काले प्रमोदसमये च समोनुभावः ॥ २६६६ ॥

६५२ क्वापि श्यानाश्मसंचयभ्रिमृत्युदंष्ट्रांकुरोत्कटान् ।
क्वचिद्रुद्धप्रकाशाभ्रकालपाशांधकारिताम् ॥ २७१० ॥

६५२ प्रभ्रश्यद्धिमसंघातगजव्यूहोल्बणान्क्वचित् ।
क्वापि निर्झरफूत्कारनाराचक्षतविग्रहान् ॥ २७११ ॥

६५३ क्वचित्सुस्पर्शपवनस्पष्टस्फुटदसृग्धरान् ।
क्वाप्यातपक्षताहिमज्योतिर्निहतदृक्पथान ॥ २७१२ ॥

६५४ दुरावरोह प्रसृते स्फुटमप्रसृते विदन् ।
ऊर्ध्वावरोहमसकृन्मन्यमानोप्यधोगतेः ॥ २७१३ ॥

६५५ तुषारकालविषमान्यद्रसमान्यादि वासरान् ।
उल्लंघ्य स दरद्राष्ट्रसीमांतग्राममासदत् ॥ २७१४ ॥

६५६ वर्धमानक्षीयमाणसंहती तौत्वजायताम् ।
धर्मे सजंबालहिमौ तुषाराद्रितटाविव ॥ २७५२ ॥

६५७ तस्कराक्रांत्यशरणं बलवान्निहताबलम् ।
अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ॥ २७५६ ॥

६५८ ततः प्रावृट्पर्यायवाहकृतोदीर्णपारिप्लुता ।
संजायतेस्म वसुधा समीभूतजलस्थला ॥ २७८६ ॥

६५९ धरित्रीपात्रेंभसीधुपूर्णे दधुर्द्रुमा ।
मग्ना लक्ष्यशिखामात्रा वलन्नीलोत्पलोपमाम ॥ २७८७ ॥

६६० लंबांबुदेंबरे दूरं वारिपूर्णे च भूतले ।
स्यूतेव विद्युद्ददृशे भिन्नद्योतननिस्वना ॥ २७९० ॥

६६१ स्वीप्रभावाविशेषेपि जन्तोर्जन्तोर्यदीशिता ।
भृत्यभावेपि यो लुप्तकृत्यो धिक्तस्य जीवितं ॥ २८१५ ॥

६६२ एषा कापुरुषासेव्या धीराणां नैव पद्धतिः ।
यदायासलवत्रासात्सौख्यवैमुख्यभागिता ॥ २८२२ ॥

६६३ वस्त्रापासन एव शीतजनितस्त्रासोऽथ तीर्थांबुभिः ।
स्नानेल्हादसुखोपलब्धिरसमब्रह्मानुभावोपमा ॥
वैक्लव्यं समरे वपुर्विजहतामेवं किलोपक्रमे ।
कैवल्याख्यसुखोपलंभपरमा पश्चात्पुनर्निर्वृत्ति ॥ २८२३ ॥

६६४ पद्मोन्माथाद्द्विरदरदनैरप्रियैः पद्मबंधो ।
रिंदौ स्पार्धिन्युदयति वपु खंडशः स्वम्रियेत ॥
तापस्त्यज्येत च रुचिरताभागिभिस्सूर्यकांतैः ।
भद्राभद्रं व्यसनसमये संभवेदप्रतर्क्यं ॥ २८५६ ॥

६६५ सर्वः स्वकार्यतात्पर्यात्प्रवर्तेत प्रियाप्रिये ।
स्नेहवैरेन्यदीये तु न किंचिदधिगच्छति ॥ २८६४ ॥

६६६ ज्योतिस्ताजितकांति दंतयुगुलं बाध्यं सुधां दीधिते ।
दानास्वाददिया प्रिया मधुलिहां कुंभस्थली कुंभिना ॥
वासस्यैव विरोधभाक् सरसिजस्येत्यत्रनेदोराते ।
नस्याप्यायकृतौ हितोयमिति नाप्यस्य द्विरेफाद्विप ॥२८६५॥

६६७ पार्थिवानर्थदुश्चिताभययक्ष्मपरिक्षत ।
स यत्कृष्णक्षपाक्षीणसोमसाम्यं समाययौ ॥ २८७१ ॥

६६८ बाणाग्निजस्त्रिपुरनिर्दहने प्रतापः ।
पाथोनिधेः प्रमथने वडवाग्निजन्मा ॥
आसाद्य मंदरनगेन समागमं हि ।
न क्वापि पन्नगपतेस्सुखसख्यमासीत् ॥ २९४८ ॥

६६९ अज्ञातोदर्कवैषम्या दुर्नीतिः सा महीभुजाम् ।
व्यावृत्या बाधताच्छिन्नपुच्छाकृष्टेव पन्नगी ॥ २९६१ ॥

६७० छिद्रांतराणि सुलभानि सदैव हंत ।
पातालरंध्रसरणैरिव दंडनीते ॥
बह्वीभवन्प्रसरमंतरसंप्रविष्टो ।
यात्यप्रतर्क्यनियमात् पतनं भजेद्वा ॥ २९६३ ॥

६७१ पार्थिवाःस्वार्थसंसिद्धित्वराविरतसत्वया ।
धिया विशुद्धं यत्किंचित्कुर्वंतीति न नूतनम् ॥ २९७५ ॥

६७२ काकुत्स्थोपि प्रियाप्रार्थी व्यग्रः सुग्रीवसंग्रहे ।
वीरोऽविधेयं स्वार्थांध्याद्वधं व्यधत वालिनः ॥ २९७६ ॥

६७३ संहृत्य सत्यनित्यत्वं राज्यगर्वाविशुद्धधी ।
आचार्यं पांडवो राजा धर्मनिघ्नोप्यघातयत् ॥ २९७७ ॥

६७४ नियतं नियतिस्त्रोतोगर्भे निमज्जतः ।
कथ्यमानं तटस्थेन श्रोतुं न श्रवणौ क्षमौ ॥ २९८६ ॥

६७५ देहिनो व्यसनापातवैवश्यादभ्रमतो पथि ॥
अकार्यं कुर्वतः कार्यः सिद्धःसंसाधयेद्विधि ॥ २९९९ ॥

६७६ उद्यदुःसहवित्ततानवतया बद्धावधाने मन ।
स्युन्मार्गभ्रमणे वशस्य रभसाच्छ्रभ्रे परिभ्राम्यतः ॥
अन्योपाहितकोशपृष्ठलुठनात्संदर्शितांगक्षते ।
जंतोर्हंत तनोति दुर्गतिशमं रम्यानुलोम्यो विधि ॥ ३००० ॥

६७७ चैत्र पादपमंडलस्य तटिनीतोयस्य वर्षागमः ।
सत्कारो गुणगौरवस्य नयनप्रेम्णोतिकासेवनम् ॥

ऐश्वर्यस्य महोद्यमो जयनिर्बेगाढाविषादग्रह ।
कर्तव्यस्य च सिंहदेवनृपतिर्म्लानौ न तत्त्वावहः ॥ ३००९ ॥

६७८ प्रवाहेणेव कृत्यस्य हठेन हरतोंतरे ।
प्रातिलोम्यं श्रितवता पारं गंतुं न पार्यते ॥ ३०१० ॥

६७९ उग्राभिषंगमनुषंगि परस्य दुःखम् ।
हंताश्लथव्यथयति प्रसभार्द्रभावम् ॥
बद्ध· सरोजकुहरे विरहार्तनादै-
श्चक्राभिधस्य मधुपाधिकमेति दैन्यम् ॥ ३०१७ ॥

६८० जातैःमावलयोद्दहे फणिकुले धिग्भोडिंबैर्मुदा ।
व्यालग्राहिविकासितास्य कुहरैग्रासस्य हा गृह्यते ॥
एतान्भक्षयितुं ननु प्रथयितुं ते जीविकायै जन-
त्रासार्थं ननु कारयंति हि दृतेर्निर्मज्जनोन्मज्जनम ॥ ३०२८ ॥

६८१ भव्यात्मत्वं प्रशममहिमोल्लासने हंत हेतु ।
भावानां तु ध्रुवमपरथा मार्दवं क्रूरता वा ॥
स्पृष्टं पादैरमृतमहस स्यात्कठोरं हिमांशो ।
याति ग्रावाप्यहह रभसादार्द्रतां चंद्रकांत ॥ ३०३० ॥

६८२ क्ष्वेडाग्नितापनिबिडोरगसंगमेपि ।
तुंगस्य चंदनतरोरपि शीतलत्वम् ॥
काले हिमर्तुपरिपिंजरसंज्वरेपि ।
निम्नस्य कूपकुहरस्य महोष्मयोग ॥ ३०३४ ॥

६८३ भ्रष्टं निर्झरवारि शुभ्रमचलै स्वीयेन भूय क्वचित् ।
लभ्यं लभ्य मथाभ्रतः कलुषताद्दुष्टं प्रकृष्टं न तत् ॥
निर्यन्निर्भरनिम्नगांबु नभसः प्राप्येत नित्यं दधत् ।
प्रालेयत्वमुपेत्य शुद्धिमधिकां नाद्रेर्हिमाद्रेर्नगे ॥ ३०३६ ॥

६८४ प्रोषाय योस्य दववह्निमदाद्दमुष्मिन् ।
स्वस्थे स तेन शिखिना ग्लपित समीपम् ॥
अभ्येति चंदनतरोर्दववाह्निदाह-
शांत्यै यदि प्रियकृदेष न तस्य किं स्यात् ॥ ३०३८ ॥

६८५ सुव्यक्तमात्रासंबोधमुग्धत्वेन विहीयते ।
तत्त्ववित्कारणाज्ञानाद्दंत करणवेदनम् ॥ ३०५४ ॥

६८६ अबालिकुंकमं पुष्पमपुष्पं क्षीरिण फलम् ।
अकालपर्ययापेक्षं वैराग्यं वा महात्मनाम् ॥ ३०७८ ॥

६८७ अटंती कुटिलं स्पष्टं सरित्सर्वैर्न लक्ष्यते ।
कांताकुंतलनिष्यंदी तोयबिंदुरिव क्रम ॥ ३०८१ ॥

६८८ न गृह्णाति शमं वेत्ति स्वस्यान्यस्य न चांतरम् ।
निर्व्यूढमददोषोय प्रायेण प्राकृतो जन ॥ ३१०३ ॥

६८९ भंडस्तांडवमंडपे कटुकथावीथीषु कंथाकवि-
गोष्ठश्वा स्वगृहांगने शिखरिभूगर्ते खटाकुस्स्फुटम् ॥
पिंडीशूरतया विटश्च पटुतां भूभृद्गृहे गाहते ।
गच्छंति हृदकूपकच्छपतुलां चित्रं ततोन्यत्र ते ॥ ३११९ ॥

६९० कर्णे तत्कथयंति दुंदुभिरवो राष्ट्रे यदुद्घोषितम् ।
तन्नम्रांगतया वदंति करुणं यस्मात्त्रपावान्भवेत् ॥
श्लाघंते तदुदीर्यते यदरिणाप्युग्रं न मर्मांतकृत् ।
ये केचिन्ननु शाठ्यमौग्ध्यनिधयस्ते भूभुजो रंजकाः ॥३१३८॥

६९१ मुखरागो मनोवृत्तेर्द्वारौज्वल्यं गृहश्रिय ।
भर्तृस्वभावस्याचारो योषितामनुमापकः ॥ ३१८३ ॥

६९२ मुग्धा न केचन परे गणिता फणिभ्य ।
कालानुकूलनिजकंडजलत्यजो य ॥
श्लिष्यंति चंदनतरोशिशिरा निदाघे ।
माघेप्यशातिमनवं विवरं विशंति ॥ ३१९८ ॥

६९३ शीतोपचारकरणाद्दयितो भवेय
मौर्वाग्नितस्य जलधे प्रसृतं धियेति ।
स्रोतो हिमाद्रिपयसो विनिपात एव ।
ग्रासीकृतं तिमिमिगाहतमेव तत्स्यात् ॥ ३२०६ ॥

६९४ उद्दीपे रक्षतस्तीरं शरीराश्रयिणी भवेत ।
ध्रुवं वनस्पतेर्वीरुत्तन्निपातानुपातिनी ॥ ३२५० ॥

६९५ विपाकसुकुमारोपि दुस्सह सूनुनाभवत् ।
विस्मारित स सौम्येन शरद्भानुरिवेंदुना ॥ ३३२३ ॥

६९६ ग्रीष्मोष्मदोषविषमेष्वविशेषवृत्ते ।
मेघोदये तटतरोस्तटिनीप्रवाह ॥
पश्यन्नकांडतडिदापतनेन नाशम् ।
नाशंसति स्वसलिलस्य विभूतिलाभम् ॥ ३३२४ ॥

६९७ कालो बली व्यवहृतेर्ननु तद्वशेन ।
पूर्वापराचरणविस्मरणेन कस्य ॥

शक्तिः क्षितेर्वहनकर्मणि योग्यतायाम् ।
निर्दारणे मुरजितस्तु वराहतायाम् ॥३३३३ ॥

५९८ उद्दिश्य यद्विदधदुद्यमभात्मयोनि-
र्दग्धो मयांगघटनं दयितेन गौर्याः ॥
सिद्धं तदत्र करुणामुमयेति हेम-
च्छत्रछलाद्धरदृशश्च्लितोऽग्निरूर्ध्वम् ॥ ३३८७ ॥

५९९ उत्पत्तिभूमिसुलभानुभवा न भूम्ना ।
कस्याप्यहो व्यभिचरत्यनुभावभाव ॥
तेजस्तमोविलुटनव्रतमुष्णभानोः ।
छेदं तदुत्यमकरोत्तमसोपि चक्रम् ॥ ३३९५ ॥

६०० कालस्यास्खलितप्रभावरभसं भाति प्रभुत्वेद्भुते ।
अंभेपि प्रवहत्स्वभावमशनैराश्यानमश्मायते ॥
ग्रावाम्भ स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुप ।
कस्यामुत्र विधातृशाक्तिघटिते मार्गे निसर्गः स्थिर ॥ ३४०६ ।

६०१ गोदावरीसरिदिवोत्तुमुलैस्तरंगैं ।
र्वक्त्रैः स्फुटं सपदि सप्तभिरापतंती ॥
श्रीकांतिराजविपुलाभिजनाब्धिमध्यं ।
विश्रांतये विशति राजतरंगिणीयम् ॥ ३४४९ ॥

---

सूक्तिसंग्रह समाप्त.

*

॥ श्रीसांबप्रसन्न ॥

# राजतरंगिणीच्या भाषांतराचें शुद्धिपत्र.



## प्रस्तावना.

| पान | ओळ | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | २४ | काला | काव्य |
| २ | ७ | इंग्रची | इंग्रर्जा |
| ४ | १८ | आश्रदात्या | आश्रयदात्या |
| ९ | २२ | नानाशास्त्रातलि | नानाशास्त्रातील |
| ११ | २३ | सुस्सलानेही | मुस्सलानें ही |
| ११ | ३१ | व व | व |
| १६ | ३२ | जागा | जागीं |
| १७ | १४ | मनाकर | मनावर |
| २० | १३ | प्रशास्या | प्रशसया |
| २१ | २३ | दान | दोन |
| २२ | १६ | त्यांच्यात लि | त्याच्यातील |
| २६ | १७ | राजाच्या त्यांच्या, | राजाच्या व त्यांच्या |
| ३० | २३ | राचांच्या | राजांच्या |
| ३२ | २९ | अभद्य | अभेद्य |
| ३२ | ३२ | स्जभाव | स्वभाव |
| ३६ | २० | गग्गलोष्ठक | गग्ग, लोष्ठक |
| ४१ | १७ | खात्राचि | खात्रीचा |
| ४२ | ४ | राजतरंगिणचाी | राजतरंगिणीचा |
| ४२ | २२ | जंबा | चंबा |
| ४८ | १८ | विक्रमादि | विक्रमादित्य |
| ४९ | १५ | वर्षसबंघें | वर्षासंबंधे |

## भाषांतर.



| पान | ओळ | अशुद्ध | शुद्ध |
|---|---|---|---|
| ४ | २४ | होता. | होता.) |
| ९ | ८ | राजाला | राज्याला |
| १० | ८ | खजानजी | खजानची |
| ११ | २४ | कृत्याकाम | कृत्याश्रम |
| १३ | २२ | षडहृदनावाच्या वनामध्यें सवेश्वर पणे रहात होता. | सर्वेश्वरपणे रहात होता. |
| १३ | २५ | दिसतें. | दिसतें.) |
| १७ | २८ | सद्गुणानें | सद्गुणांनीं |
| १९ | २७ | तोच | तीच |
| २१ | ३४ | राक्षसांनीं | राक्षसांना |
| २१ | २१-२२ | या दोन ओळी वरील कंसात पाहिजेत. | |
| २६ | ७ | दुर्गाग लिका पासून | |
| | १० | वरील—चालू आहे. येथवर भाग कंसांत हवा. | |

| पान | ओळ | अशुद्ध | शुद्ध |
|---|---|---|---|
| २७ | १८ | पोषणोध्वत | पोषणोद्यत |
| ४५ | ३३ | काहे | आहे |
| ५१ | ३२ | कमलेंचंद्रोदया | कमले चंद्रोदया |
| ५५ | ५ | निडर राजाला—नि अक्षर मोठें नको. | |
| ५६ | ४ | नाहीं. | याच्यापुढे) पाहिजे |
| ,, | ? | आली बृहत | यात बृहतच्या मागें (पाहिजे |
| ५६ | ९ | आलेले | असलेले |
| ५८ | ८ | :— | हे नको आहे |
| ५८ | १५ | आहे व हें | आहे हें |
| ६० | २७ | आता जा | आता जा ' |
| ६१ | १७ | पर्व रात्रीं | पूर्व रात्रीं |
| ६७ | १७ | सरीता | सरिता |
| ६८ | ? | परि विशोक | पारे विशोक |
| ६८ | १९ | या दुर्लभक | (या दुर्लभक |
| ६८ | २१ | म्हणणें आहे. | म्हणणे आहे.) |
| ७१ | २३ | अधम | अधर्म |
| ७५ | २३ | महापद्म | महापद्म |
| ७७ | ५ | त्याला गोष्ट | त्याला ही गोष्ट |
| ७८ | ९ | स्हनत्संग | स्हेनत्संग |
| ७९ | १२ | होऊल | होऊन |
| ७९ | ३० | येतें. | येतें. ' |
| ८० | १४ | राणीच | राणी |
| ८१ | ६ | पगोत्स | पर्णोत्स |
| ८१ | २४ | दोल | दोन |
| ८३ | ५ | पातालातालिहि | पातालांतीलहि |
| ८३ | २५ | २ १/० शेर | २ १/० शेर) |
| ८४ | १७ | बांधाविलें. अशा. | बांधविले ते अशा |
| ८५ | २० | साऱ्य | साऱ्या |
| ८७ | ३ | दृष्टीस अशा पडल्या | अशा दृष्टीस पडल्या. |
| ८७ | २० | मर्ती | मूर्ती |
| ९२ | ५ | घंटा | घटा |
| ९४ | ६ | भंगिल्य. | भंगिन्य |
| ९५ | १३ | डाल्यापालख्या | डोल पालख |
| ९५ | ३३ | सय | सर्व |
| ९६ | ५ | कार्तिकेच्या | कार्तिकेयाच |
| ९६ | १३ | आगला | आपला |
| १०० | २३ | झासेल्या | झालेल्या |
| १०६ | ४ | चलगज | चलगंज |
| १०८ | १८ | भष्यार्चा | भाष्यार्च |
| ,, | २८ | तिर्थ | तीर्थ |
| १२१ | ४९ | होते. जुने | होते ते जु |
| ,, | १४ | कमानी—धनुष्यापासून | धनुष्या—पास |
| ,, | २१ | जलगजाचे | गजाचे |
| ,, | २४ | टाकलला | टाकलेला |
| १२३ | २३ | केला आहे | केला आहे |
| १२४ | १५ | पणाणे— | पणानें |
| ,, | २५ | वादग्रस्त आहे. | वादग्रस्त आ |
| १२८ | ८ | नरवाहान | नरवाहन |
| १२९ | २१ | सौमाग्य | सौभाग्य |
| १२९ | ३२ | तेये | तेथ |
| १३१ | २१ | आश्रु | अश्रु |
| १३२ | १७ | संथ पावसाच्या | संथ पाण्य पावसाच |
| १३३ | १६ | प्रार्थ | पार्थ |
| १३४ | ४ | सा खा | सारखा |
| १३९ | २२ | डामरांनी | डामरांना |
| १४१ | ११ | रागा | राजा |
| १४३ | ९ | वरिदेंव | वीर देव |
| १४३ | २६ | मेध्यांनी | मेघांनीं |
| १४१ | ३१ | भूमटा | भूभटा |
| १५० | २७ | त्यासा | त्याला |
| १५२ | १५ | होणाम्या | होणाऱ्या |
| १५२ | १५ | व्यथ | व्यर्थ |
| १५३ | १२ | जालप | जाल्म |
| १५४ | ११ | वितस्तोचा | वितस्तेच |
| १५४ | ११ | )मर एक | )एक मर |
| १५९ | १७ | भूभंगानें | भ्रूभगाने |

